प्रतापः—( भूमिं स्पृष्ट्वा प्रणमति प्रतिजानीते च । )

यावन्मे धमनीमुखेषु रुधिरक्लेदोऽपि सन्तिष्ठते
मांसं वाऽस्थनि तिष्ठति क्वचिदपि प्राणाः शरीरे स्थिताः ।
तावन्म्लेच्छपतेः कथंचिदपि न प्राप्स्याम्यहं निघ्नताम् ।
स्वातन्त्र्यस्य पदं समस्तवसुधां नेतुं यतिष्ये भृशम् ॥२६॥

( अथ सर्वे स्वशस्त्राण्युद्यम्य प्रतिजानते )

सर्वे—एवं सति वयं सर्वे त्वदायत्तजीवनाः ।

---

अथ प्रतापो हस्तेन भूमिं स्पृष्ट्वा तत्रस्था भूम्यधिष्ठायकदेवता प्रणमति । हस्तेन पादं स्पृष्ट्वेव उत्तमप्रणामव्यवहारो भवतीति तमेवासौ विदधाति । प्रतिजानीते चेति । वक्ष्यमाणां प्रतिज्ञां च करोति । यावन्मे इत्यादि । यावत्पर्यन्तं मे धमनीमुखेषु-नाडीप्रान्तेषु, रुधिरक्लेदोऽपि-रुधिरस्यार्द्रताऽपि, सन्तिष्ठते-विद्यते इत्यर्थः । अथ रुधिरार्द्रतानाशेऽपि स्वस्थता संभवतीत्याह-मांसमिति । वा-अथवा यावत् अस्थनि क्वचिदपि मांसं तिष्ठति विद्यमानमित्यर्थः । रक्तमांसविनाशेऽपि जीवति सत्याह । किं बहुना-यावत् प्राणाः शरीरे स्थिताः विद्यमानाः सन्ति, तावत् अहम्-अहमिति-स्वाभिमानसूचकम्, क्षत्रियकुलोत्पन्नः आर्यजातीयोऽहं प्रतापः, कथमपि-केनापि सामादिप्रकारेण, म्लेच्छपतेरकबरस्य, निघ्नताम्-अधीनता, न प्राप्स्यामि, किं तु समस्तवसुधा सम्पूर्णा पृथिवीं, स्वातन्त्र्यस्य पदं स्थानं, नेतुं-प्रापयितुं, भृशमत्यन्तं, यतिष्ये-यत्नं करिष्यामि । 'धमनी' ति 'नाडी तु धमनिः शिरा' इत्यमरः । अत्र 'सर्वतोऽक्तिन्नर्थादित्येके, इति ङीप् । 'संतिष्ठते' इत्यत्र 'समवप्रविभ्यः स्थः, इत्यात्मनेपदम्, 'यावत्पुरानिपातयोर्लट्' इति लट् । वसुधापदेन वसुधारकत्वाचस्याः स्वातन्त्र्य-प्रापणम् आवश्यकमिति सूच्यते ॥ २६ ॥

अथ प्रतापस्य प्रतिज्ञामाकर्ण्य उत्साहोद्रेकाद् वीररसपूर्णास्तत्रस्थाः सर्वेऽपि स्वशस्त्राणि उद्यीय प्रतिज्ञां कुर्वन्ति । तामेवाह-एवं सतीति । 'यदि म्लेच्छपतेरधीनता न प्राप्स्यामि, समस्ता पृथ्वीं च स्वातन्त्र्यपदं प्रापयितुं यतिष्ये' इति भवता निश्चयस्तर्हि वयं सर्वेऽपि 'त्वदायत्तजीवना'

किञ्च—

धर्मबिन्दुरपि यत्र शरीरात्तावकान्निपतितः समरे स्यात् ।
तत्र शोणितभवाः शतशः स्युः प्रत्यनीकपृतनासु तटिन्यः ॥२७॥

( ततः सभयमिव सा वाराङ्गना पुनरुपेत्य । )

वेश्या—महाराज ! क्षमस्व माम् । अद्य प्रभृति अहं काषाय-वसना योगिनीवेषेण भिक्षामाचरन्ती शौर्यसंचारि-गानबलेन सहस्रशो वीरान् देशसेवार्थं सज्जीकरिष्यामि,

---

इति । तत्र आयत्तम्-अधीनं जीवनं येषां ते तथा, त्वदधीनजीवना । यत्र यथा अस्माकं जीवने प्रयोजनं स्यात् तत्र तथैव नियोजय, नैवास्माकं ननु नचेत्यादि किमप्यत्र वक्तव्यमस्ति ।

किं चेत्यादि । नैव अजाविकादय इव शौर्यरहिता अकिंचित्कराश्च वयं किं तर्हि इत्याह—धर्मबिन्दुरिति । यत्र—यस्मिन्, समरे—सग्रामे, तावकात् त्वदीयात् शरीरात् धर्मबिन्दुरपि निपतितः स्यात्—यदि निपतेत्, तर्हि तत्र समरे-तत्रैव सग्रामे इत्यर्थः । प्रत्यनीकपृतनासु शत्रुसेनासु, शोणितभवाः—प्रत्यासत्त्या शत्रुसैनिकानां रक्तोत्पन्ना शतशस्तटिन्यो नद्यः स्युः, भविष्यन्तीत्यर्थः । अत्र भवतः साधारणदुःखदशायां स्वेदबिन्दुनिपातेऽपि यदि वयमेवं करिष्यामस्तर्हि भवतः शरीरतो रुधिरनिपाते शत्रूणां किं करिष्याम इति तु वर्णनातीतमेवेति तेषामाशयः ॥ २७ ॥

सभयमिवेति । अपराधिनां हृदये स्वाभाविकमेव भयं भवतीति सभयमिव सा प्रतापसमीपे गत्वा कथयति । किं कथयतीत्याह—महाराजेत्यादि । काषायेति । कषायेण रक्तानि वस्त्राणि काषायाणि । काषायाणि वसनानि वस्त्राणि यस्याः सा, त्यक्तगृहकार्या विरक्तेत्यर्थः । अथ आजीवनोपायमाह—योगिनीवेषेण भिक्षामाचरन्ती 'भिक्षया आजीवनं प्रायश्चित्तमेवेति' प्रायश्चित्तं कुर्वती । अथ तत्फलमाह—शौर्येत्यादि । शौर्यसंचारिणः—शौर्यप्रादुर्भावकस्य, गानस्य बलेन । हठादिव शौर्योत्पादकेन गानेनेत्यर्थः । सहस्रशो वीरान्, देशसेवार्थं—देशस्वातन्त्र्यार्थं, सज्जीकरिष्यामि प्राणानपि त्यक्तुमुद्यतान् करिष्यामि । अन्यदप्याह—कातराणामपीति । युद्धवार्ताश्रवणमात्रतोऽतिकम्पितहृदयानामपि हृदये,

कातराणामपि हृदये दृढमतिप्रबलं शौर्यं संचारयिष्यामि,
नातः परं भवद्राज्ये कोऽपि कातर उपलप्स्यते ।
( इति पादयोः पतति । )

प्रता०—उत्तिष्ठ, देशसेवार्थमेवमेव विधेहि ।

नेपथ्ये

साधु साधु सर्वे भवन्तो दृढसंकल्पाः सन्तु ।
( ततो निष्क्रान्ताः सर्वे । )

इति श्री म० म० मथुराप्रसादकृतौ वीरप्रतापनाटके राज्यपीठाधिरोहणं नाम प्रथमोऽङ्कः ।

---

किमुत अकातराणां हृदये । दृढमतीत्यादि । दृढा मतिर्यस्मिन् तत्, पराङ्मुखविचाररहितम् । अथवा-दृढम्-निश्चितम्, अतिप्रबलम्-अत्यन्तयुद्धाभिनिवेशयुक्तं, शौर्यं संचारयिष्यामि-प्रतिक्षणमुच्छलद्रक्तेषु अहं शौर्यमभिनिवेशयिष्यामि । किं बहुना, तथाभिमतादप्यधिकतरमहं संपादयिष्यामि । किं तदित्याह-नातःपरमित्यादि । अतः परम्-मम गमनानन्तरमेव प्रारभ्यमाणमरकार्योत्तरकालादनन्तरं भवद्राज्ये समस्तराज्येऽपीत्यर्थः, कोऽपि-एकोपि, कातरः नोपलप्स्यते सर्वथा कातराणामभावास्तस्प्राप्तिमसंभावियिनीमेव विधास्यामि । मा भ्रमस्व, इति एवं, कथयन्ती सती पादयोः प्रतापस्येति शेषः पतति ।

अथ प्रतापस्तामादिशति-उत्तिष्ठेति । स्वकार्ये सन्नद्धा भव । देशसेवार्थम्-एतेन पुण्यातिशयो बोध्यते, तथा हि एतत्कार्यसंपादनेन देशस्वातन्त्र्यलाभात्समस्तब्राह्मणक्षत्रियवैश्येतरेषां स्वत एव सेवा संपादिता भवति । एवमेव—यथा त्वया उक्तं तथैव, विधेहि ।

नेपथ्ये इति । कुत्राप्यनिर्दिष्टस्थाने स्थितः कश्चिद् देवो ऋषिर्वा कथयति । साधु साधु-अतिशोभनमिदं भवतां कार्यम् । दृढसंकल्पाः-अपरित्यक्तप्रतिज्ञा भवन्तः सन्तु । इत्याशिषं ददाति । अत्र आशिष्यर्थे लोट् । इत्याशिषोऽनन्तरं सर्वे निष्क्रान्ताः ।

इति श्री म० म० मथुराप्रसादकृतौ वीरप्रतापनाटके वैजयन्तीटीकायां राज्यपीठाधिरोहणं नाम प्रथमोऽङ्कः ।

---

# द्वितीयोऽङ्कः ।

## पटोन्नयनम्

( पितुः क्रियाकर्मनिवृत्तः सुखासीनः प्रतापः । )

प्रतापः—( क इदानीं द्वारपाल इति ज्ञातुं घण्टिकां वादयति )

दौवारिकः—( प्रविश्य ) जेदु जेदु महाराओ।

जयतु जयतु महाराजः ।

प्रता०—शक्तिसिंहमाह्वय ।

दौ०—जं देवो आणवेदि ।

यत् देव आज्ञापयति ।

( इति निष्क्रान्तः ।

दौ०—( शक्तिसिंहमुपसृत्य ) महाभाय ! तत्थ महाराओ

महाभाग्य ! तत्र महाराजो

भवन्तं दट्ठुं अहिलसइ ।

भवन्तं द्रष्टुमभिलषति ।

---

अथ द्वितीयाङ्कमवतारयति । तत्र 'किमौर्ध्वदैहिक' मित्यादिना प्रथमाङ्के उन्नीतं पितुरौर्ध्वदैहिककृत्यकरणं 'पितुः क्रियाकर्मनिवृत्तः, इत्यादिना सूचयन्, 'आर्यस्थितीनाम्' इत्यादिना पुरोहितस्याशीर्वचनेनोपक्षिप्तमार्यमर्यादारक्षणं स्वकीयपृथ्वीपालनं च, 'खड्गो रणे नृत्यतु' इत्यादिना सूचितं भावियुद्धं भ्रातृसंग्रहादिद्वारेण तद्विजयोपायं च दर्शयति । पितुरिति । पितृसम्बन्ध्यौर्ध्वदैहिकसकलकर्मकरणानन्तरं, विरुद्धपक्षस्याभावात्, प्रजायाः स्वस्मिन्ननुरागाच्च सुखासीनः आर्यमर्यादारक्षणोपायं चिन्तयन् पूर्वं शक्तिसिंहमात्मानुयायिनं कर्तुमुपक्रमते । तत्र शक्तिसिंहमानेतुमनुचरमाह्वयति—क इदानीमित्यादिना । दौवारिकः, प्रभुर्माह्वयति इति प्रतापभावमवगत्य प्रविश्य, 'जयतु जयतु' इत्यादिना

शक्ति०—दौवारिक! महाराजं निवेदय, अनुपदमेवागच्छामि।
दौ०—जहा तुम्हाणं आणा।
यथा युष्माकम् आज्ञा।
( आगत्य प्रतापं निवेद्य निष्क्रान्तो दौवारिकः। यथास्थान-स्थितश्च। )
दौ०—( पुनः प्रविश्य ) जेदु जेदु महाराओ, सत्तिसीहसहिओ
जयतु जयतु महाराजः, शक्तिसिंहसहितः
सालुम्बो समुवट्ठिओ।
सालुम्बः समुपस्थितः।
प्रतापः—प्रवेशय। ( दौवारिकस्तौ निवेद्य प्रवेशयति। )
( यथास्थानं तिष्ठन्ति सर्वे )
( प्रतापः—उत्थाय सालुम्बं प्रणम्य शक्तिसिंहं हृदयेनालिङ्गति पुनः परावृत्य यथास्थानं तिष्ठति। )
प्रतापः—अस्थाने तस्मिन् दिवसि पित्रा क्रोधो विहितः।
शक्ति०—ममादृष्टमेव कारणम्, न किमपि तेषु वक्तव्यम्।
यतः—

---

स्वागमनं सूचयति। देव इति। अत्र देवो राजा। महाभाग्येति महत् भाग्यं यस्येति तत्सम्बुद्धौ। यतो महाराजस्त्वामाह्वयति,अतस्त्वमिदानीं महाभाग्य एव संजातः। द्रष्टुमभिलषति-एतेन तस्मिन् आदरातिशयो दृश्यते।

शक्तिसिंहः स्वस्य अदृष्टमेव कारणं मन्यमानः कथयति—ममादृष्टमेवे-त्यादि। अदृष्टमिति पूर्वार्जितधर्माधर्मादिजन्यं कर्म। तच्च फल-बलाज्जायमानं सामान्यापराधिन विशेषापराधित्वे परिणमयति। न किम-पीति। तेष्विति पूज्यत्वाद् बहुवचनम्। तस्मिन् पितरि, किमपि नैव वक्तव्यम्। दोषसत्त्वेऽपि पूज्यत्वात्ते दोषविषयतया नैवोच्यन्ते। तदेव दर्शयति। यत—यस्मात्कारणात्।

पूज्यानां चरितानि वाच्यपदवीं नायान्ति लोके क्वचित्
　कन्याया यतिवेशतोऽपि हरणे पार्थो बुधैः स्तूयते ।
ज्ञात्वेत्याचरितं दुरोदरमिदं भीमाग्रजेन स्वयं
　धर्मात्मा स निगद्यते, पितरि तज्ज्ञात्वैव संतुष्यते ॥ १ ॥

सालुम्न — नैवम्-अस्त्यत्र कश्चिद् गूढाभिसन्धिः,

---

पूज्यानामिति । लोके-जातित्वादेकवचनम्, लोकेषु सूक्ष्मविचार-शून्येषु जनेषु । यद्वा-लोके-संसारे क्वचिदपि पूज्यानां पूजनीयानां महात्मनामित्यर्थः, चरितानि-कृत्यानि, वाच्यपदवीं-वाच्यस्य निन्दाविषयतया कथनीयस्य, पदवीं-स्थानं, न आयान्ति न प्राप्नुवन्ति । तदेव दृष्टान्तद्वारेण समर्थयति—कन्याया इति । कन्यायाः-अनूढायाः, एतेन तस्या हरणे महापातकित्वं सूचितं भवति । यतिवेषतः, यतेः सन्यासिनो वेषतः बाह्याडम्बरेण, एतेन विश्वासयोग्यता तस्य दर्शिता भवति । हरणे हठात् गृहीत्वा पलायने । एतेन महानर्थकारित्वं तस्य सूचितं भवति । तथाहि-पूर्वं कन्याया हरणमेवानर्थजनकम्, तत्रापि अन्यवेषतः, अथापि यतिवेषतः । पुनरपि हरणं-हठात् गृहीत्वा पलायनम्, एवं सत्यपि, पार्थः-पृथाया अपत्यं पार्थोऽर्जुनः, बुधैः-विद्वद्भिः, स्तूयते-प्रशस्यते, साधारणपुरुषैः प्रशंसनं तु कथंचिद्भवेदपि परं तु स तु बुधैः स्तूयते, अत एवोच्यते पूज्यानां चरितानि वाच्यपदवीं नायान्तीति । अन्यदप्याह-भीमाग्रजेन-युधिष्ठिरेण, इदं दुष्टमुदरं-यस्येति दुरोदरं द्यूतक्रियामिति ज्ञात्वा स्वयम् आचरितम्, न तु परम्परया केनापि द्वारा सेवितम् । स युधिष्ठिरः, धर्मात्मा धर्ममूर्तिर्धर्मस्वरूपः निगद्यते । पितरि-पितृविषये, तज्ज्ञात्वैव संतुष्यते । अयं भावः-यथा युधिष्ठिरो द्यूतसेवनेनापि धर्मात्मा निगद्यते तथा पिता उदयसिंहोऽपि पुत्रप्राणदण्डकारकः उचितकार्येणेति भावः । अत्र अनुचितकार्यकारित्वात्तेषां निन्दा व्यज्यते ॥ १ ॥

अथ तदभिन्नेत्यस्यपन्द्रसालुम्नः कथयति—नैवमिति । यथा भवद्भिः-छेदेनापराधात्प्राणदण्डोऽनेन विहित इति भवद्भिरवगम्यते न तथाऽस्ति । किन्तु अत्र प्राणदण्डविषये कश्चित्प्रधानभूतः गूढः-अत्यन्ततिरोहितः, अभिसन्धिर्मारयेच्छाविषयकं रहस्यमस्ति । किं तदिति दर्शयति—

अन्यदपि कारणम्—विचारितं तेनासीत्-यज्जगन्मल्लाय राज्यप्रदानसमये अतिशयितविक्रमशौर्यसाहसादिगुणमापन्नोऽयमेवौद्धत्यात् परिपन्थी भविष्यतीति तेन तथाऽऽचरितम्।

प्रता०—युज्यते चैवम्। शक्तिसिंह! दिष्ट्या सालुम्बेन रक्षितोऽसि। अयं ते प्राणरक्षकः पिता। यतः—

चाण्डालहस्तेषु समर्पितं त्वां
को नाम निष्काशयितुं समर्थः।
धैर्यक्षमाशालिमनाः प्रवीर
सालुम्बतातो यदि नान्तरा स्यात्॥२॥

---

सालुम्ब कारणान्तर दर्शयति—विचारितमित्यादि। सुगमम्। अथ प्रताप पूर्वोक्तकारण दृढ मन्यमान कथयति—युज्यते चैवमिति। एव विधकारणेन तु प्राणदण्डाज्ञाकरण युक्तियुक्त भवति। अथ प्रतापः शक्तिसिंह कथयति। शक्तिसिंह! त्व दिष्ट्या शुभकर्मोदयात् रक्षितोऽसि। प्राणरक्षक इति। अयं तव भयत्राता पिताऽस्ति। तदेव दर्शयति—

चाण्डालेति। चाण्डालाना हस्तेषु एकस्य चाण्डालस्य हस्तात् अनुनयोत्कोचदानसाहसादिना निष्काशयितु शक्यते परंतु बहूना चाण्डालाना हस्तेभ्य कथमपि नैव निष्काशयितु शक्यते। समर्पितं-सम्यक् प्रकारेण अर्पित, स्वकीयविश्वस्तपुरुषद्वारेण दत्त त्वा को नाम निष्काशयितु चाण्डालहस्तेभ्यो रक्षितुमित्यर्थ। समर्थोऽस्ति। अद्यापि तथाभूतसामर्थ्यवान्नास्तीत्यर्थ। यदि धैर्य-व्यवसाये स्थिरता, उक्तं हि 'व्यवसायादचलन धैर्य विघ्ने महत्यपि'। क्षमा सहिष्णुता ताभ्या शालि शोभमान, मनो यस्य स। एतेन उचितानुचितकथनेऽपि तत्सहनपूर्वकमस्य अभिमतकार्यकारित्व बोध्यते। तथा प्रवीर—प्रकृष्टो वीर प्रवीर, एतेन शौर्यपूर्वकमपि अस्य कार्यसंपादने शक्तिर्बोध्यते। सालुम्बतात—पूज्यत्वाद् वृद्धत्वाच्च तातस्थानीय सालुम्ब, पितु समकालिकोऽय

शक्ति०—एवमेवैतत्।

प्रता०—सालुम्ब ! किमाज्ञापयस्येनम्।

सालु०—( मनसि ) ममौरसः पुत्रः संजात एव। अयमत्र स्थितः परमैश्वर्यभोक्ता भवतु।

( प्रकाशम् ) अयं भवतां स्थापनिका। यथा भवद्भ्यो रोचते।

प्रता०—अयमस्मत्सविधे स्थितोऽस्मदीयसव्यबाहुरिव सर्वकार्येषु सहायको भवतु।

सालु०—एवं सति

दृप्यद्द्विपत्क्षितिपालसेना—

समुद्रकुम्भोद्भवशक्तिरेषः

---

सामन्तः। अन्तरा मध्ये न स्यात्—न भवेत्। 'यद्यायद्योरुपसंख्यानम्' इति लिङ्। सालुम्बतातस्य मध्ये आगमनादेव त्वं चाण्डालहस्तात् रक्षित इति भावः ॥ २ ॥

शक्तिसिंहः कथयति—एवमेवेति। यथा भवद्भिरुक्तम्, एतदेवमेव। सालुम्बतातेनाहं रक्षितोऽस्मीति मे प्राणरक्षकत्वात्पितैवेत्यर्थः। किमाज्ञापयसीति। किमयं भवता रक्षितो भवत्पुत्रस्थानीयो भवत्सविधे तिष्ठतु, किं वा तवौरसः पुत्रो जात इति कृत्वा मम सविधे तिष्ठतु। स्थापनिकेति। यथा स्थापनिकायां रक्षकस्य तद्ग्रहणे नाधिकारो भवति, एवमस्य विषयेऽपि मम नाधिकारः, अयं तवैवेति भावः। यथा भवद्भ्य इति। यदि एतद्रक्षणे पुनरपि मामाज्ञापयन्ति भवन्तस्तदाऽहं तथा विधास्यामि, अथात्मीयस्थापनिकावदिमं ग्रहीतुमिच्छन्ति तदा गृह्णन्तु इत्युभयप्रकारयोर्मध्ये यथा रोचते। भवद्भ्य इत्यत्र 'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी।

दृप्यदिति। दृप्यन्तः—दर्पयुक्ताः, द्विषन्तः—शत्रुभूताः, ये क्षितिपालाः—राजानः, तेषां या सेना सैव समुद्रस्तत्र, कुम्भोद्भव इव—अगस्त्य इव तच्छोषणे तन्नाशने अगस्त्यसमानः एष शक्तिसिंहः चेद्—यदि तव सहायः—

तिष्ठेत्सहायस्तव चेत्तदा स्यात्
किया‍न् वराको यवनाधिनाथः ॥ ३ ॥

प्रता०—अस्त्वेवम् । मदभिन्नशरीर एवासौ तिष्ठतु ।
दश ग्रामास्तुभ्यं दीयन्ते तत्र ते संतानसत्ता सदा तिष्ठतु ।
इति स्वमुद्राङ्कितं लेखं विधाय तस्मै ददाति ।

सालु०—अनेन तवौदार्येण यावद्वंशपरंपरं क्रीतोऽस्मि ।

शक्तिः—महाराज ! श्रूयते राज्यलोभात्सगरसिंहो म्लेच्छराज-मुपगतः ।

प्रता०—आः ! कोऽयं वराकः । गच्छतु, किमनेनापह्रियते । पश्य—
म्लेच्छाधिनाथस्य समस्तसैन्यमेकाक्यहं नाशयितुं समर्थः,
यन्धोर्गणस्यानुगतौ भवेयुर्द्वित्राः कलास्तस्य समूलनाशे ॥४॥

---

तवानुचरः सन् तिष्ठेत्, तदा अयं प्रत्यक्षविषयीभूतो वराकोऽकिञ्चित्करो यवनाधिनाथः अकबरः कियान्-कियत्परिमाणः स्यात् । यथा अगस्त्यः क्षणेन समुद्रमशोषयत्तथैवायमपि विपक्षिसेनां क्षणेन नाशयिष्यतीत्यकिञ्चित्कर एवाकबरो भविष्यतीति भावः ॥ ३ ॥

अनेनेति ग्रामदान 'राजपद' प्रदानरूपेणौदार्येण । यावद्वंशेति । 'यावदवधारणे' इति समासः । यावत्पर्यन्तं मे वंशपरम्परा तावत्पर्यन्तं क्रीतोऽस्मि, मम भाविनी सन्ततिरपि तवानुगामित्वं न त्यक्ष्यतीति भावः । राज्यलोभादिति । राज्यस्य लोभात्-अनुचिताभिलाषात् । म्लेच्छराजमिति । म्लेच्छाना-प्रत्यन्तदेशवासिनां राजा, न त्वस्माकमपीत्यर्थः । तमुपगतः तत्सविधे प्राप्तः । स म्लेच्छराजः साहाय्यदानेन मेवाडदेशाधिपतिं विधास्यतीत्यभिलाषया तदासतां प्राप्त इति भावः ।

प्रतापः सक्रोधं कथयति-आः ! कोऽयमिति । आ इति क्रोधसूचकमव्ययम् । अयं सगरसिंहो वराकोऽकिञ्चित्कर एव, न कुत्रापि गणनीयः सामर्थ्यशून्यत्वात् । अनेन गतवता सगरसिंहेन किम् अपह्रियते, न किञ्चिदप्यनिष्टं विधातुं शक्यत इति भावः । पश्य—अन्तःकरणेन विचारय । म्लेच्छाधिनाथस्येति सुगमम् ।

सालु० राजन्—एवमेवैतत् ।

शक्ति०—बहुकालातिपातः संजातः । पश्य—

तापं संजनयन्स्मृतिं कवलयंस्तर्षं समुल्लासयन्
दृष्टिं संभ्रमयन्मनो विकलयन् स्वेदाम्बु संचारयन् ।
भूमिं संज्वलयन्नपोऽपचययन् पान्थान्समुत्सारयन्
वह्निं संघटयन् मृगानसितयन् सूर्यः समुज्जृम्भते ॥ ५ ॥

प्रता०—आम्, कथानुकथनेनाज्ञात एव बहुकालः संजातः ।

( ततः सर्वे उत्तिष्ठन्ति । सालुम्बशक्तिसिंहौ निष्क्रामतः । )

---

शक्तिसिंहो मध्याह्नसमयमवलोक्य कथयति—कालेति । कालस्य—माध्याह्निकस्नानकालस्य, अतिपातः-समयातिक्रमः, संजातः-अभूत् ।

तमेव मध्याह्नसमयं वर्णयति— तापमिति । तापं-संतापं, संजनयन्-सम्यक् प्रकारेणोत्पादयन्, स्मृतिं-स्मरणशक्तिं, कवलयन्-कवलीकुर्वन् अतिसंतापवशात्स्मरणशक्तेर्ह्रासो भवति । तथा तर्षं-पिपासां, समुल्लासयन् वर्धयन्, 'उदन्या तु पिपासा तृट् तर्षो जग्धिस्तु भोजनम्' इत्यमरः दृष्टिं दर्शनं ज्ञानं वा संभ्रमयन्-अतद्वति तत्प्रकारतयोत्पादयन्, मरीचिका-जननात्, अत्यन्तसंतापतयोद्वेगजननेनान्यथा बोधोदयाद्वा । तथा मनो-मानसं, विकलयन्-व्याकुलं कुर्वन्, स्वेदाम्बु-स्वेदजलं, संचारयन्-प्रवाहयन् । भूमिं-पृथ्वीं, संज्वलयन्-अत्यन्तसंतप्तां कुर्वन्, अपो-जलानि, अपचययन्-अपहारं कुर्वन्, 'अपहारस्त्वपचय' इत्यमरः । पान्थान्-पथिकान्, समुत्सारयन्-प्रतिरोधयन्, अत्यन्तघर्मोदयात्पथिकानां गति-प्रतिरोधं कुर्वन् । वह्निं संघटयन्—अतिसंतापवशात् धूलिकणेषु वह्नेः प्रतीतिमिव जनयन्, मृगान् असितयन्-श्यामं कुर्वन् सूर्यः समुज्जृम्भते—उदयमानः सूर्यः प्रचण्डः सन्नूर्ध्वमायातीति भावः । अत्र प्रतिचरणं पूर्ववाक्येषु घटादीनां, मध्यवाक्येषु नामधातूनां प्रयोगात् अन्तिमेषु ण्यन्तानाम् इति न भग्नप्रक्रमता । सूर्यस्यापि तथैवौष्ण्यप्रापर्दमुपपद्यत इति स्वभावोक्त्यलंकारः ॥ ५ ॥

प्रतापः—(किञ्चित्परिक्रम्य निःश्वस्य च अकबरं लक्ष्यीकृत्य । मनसि ।)

रे म्लेच्छाधिप ! दुर्विनीत ! फलितः कौटिल्यजालाकुलो-
दिष्ट्या रूढपदस्त्वया विरचितो भेदप्रयोगः स्वतः ।
यल्लोभोपहतस्त्वदीयशरणेऽभून्मे पितृव्यः स्विकां
मर्यादामपहाय पूर्वपुरुषायातां श्ववृत्त्या स्थितः ॥ ६ ॥

दौवारिकः ( प्रविश्य ) जेदु जेदु महाराओ । आगराणयरा
जयतु जयतु महाराजः । आगरानगरात्
आयादो भद्दमुहणामा चारणो दुआरि चिट्ठइ ।
आयातो भद्रमुखनामा चारणो द्वारि तिष्ठति ।

---

तत्कौटिल्यं स्मरन्क्रोधावेशवशात्तमभिलक्ष्य कथयति प्रतापः—रे म्लेच्छाधिपेति । रे इति असदामन्त्रणे, म्लेच्छानां भक्ष्याभक्ष्यादिविवेकशून्यानाम्, अधिपः प्रभुस्तत्सम्बुद्धौ, एतेन महापापाचारित्वमस्य द्योत्यते । दुर्विनीत ! एतेन स्वार्थसाधकशीलत्वमस्य सूच्यते । कौटिल्यजालेन-मायाप्रपञ्चेन, आकुलो व्याप्तः, सर्वतो भावेन कौटिल्यप्रपञ्चितः, त्वया-अकबरेण, हृदिस्थत्वात् क्रोधावेशवशाच्च साक्षात्सन्मुखस्थितमिव मन्यमानेन युष्मच्छब्दप्रयोगः कृतः । विरचितः कोऽपि शिशोदियावंशीयः प्रतापविरुद्धस्त्वत्समस्तविधे समायात्विति निर्मितो भेदस्य-प्रयोगः, दिष्ट्या त्वदीयशुभप्रारब्धोदयात्, रूढं-सजातं, पदं-स्थानं यस्य स तथा आरोपितपदः सन् स्वत एव त्वदीयव्यापारनिरपेक्ष एव फलितः सफलतां गतः । तमेव भेदं दर्शयति । यत् लोभेन उपहतः—लोभोपहतः, राज्यलिप्सया युक्तो मे पितृव्यः—पितुर्भ्राता सगरसिंहः, पूर्वपुरुषायाता—वंशपरंपरानुगता, स्विका—स्वकीया, मर्यादा—स्वाधीनतारूपा स्थितिम् अपहाय त्यक्त्वा, "अधीनवृत्तिमेव श्वकृत्यं मन्यमानः कथयति"। श्ववृत्त्या 'सेवा श्ववृत्तिराख्याता' त्वदधीनवृत्त्या स्थितः सन् त्वदीयशरणेऽभूत् । अयमेव भेदो यन्मे पितृभ्रो राज्यलिप्सया त्वत्सविधे प्राप्तः ॥ ६ ॥

आगरेति । अकबरनिवासस्थानात् स्वनामख्यातात्पत्तनात् ।
पूर्वकर्मेति । पूर्वजन्मकर्मप्रभावेण अनु पश्चादस्मिन् जन्मनि प्राप्ता,

प्रता०—( मनसि ) तन्नगरवृत्तान्तपरिज्ञानाय प्रेषितश्चरोऽयम् ।
( प्रकाशम् ) प्रवेशय ।

( ततः प्रविशति तेन सह दौवारिकः । )

प्रता०—दौवारिक ! त्वं स्वनियोगमशून्यं कुरुष्व ।

( ततो निष्क्रामति दौवारिकः । )

प्रता०-भद्रमुख ! स्वगमनात्प्रभृति कथय आगरानगरवृत्तान्तम् ।

भद्रमु०—सुणोदु महाराओ । पुव्वं अकबरेण अप्पाणं अरियं
शृणोतु महाराजः । पूर्वमकबरेण आत्मानमार्यं

छत्तिअं संपादइउं बम्हणा कहिया । तओ तेहिं बम्हणेहिं
क्षत्रियं संपादयितुं ब्राह्मणाः कथिता । ततस्तैर्ब्राह्मणै.

कहियं । पुव्वकम्मणो पहावेण जहा राया वा धणिओ
कथितम् । पूर्वकर्मणः प्रभावेण यथा राजा वा धनिको

---

नित्याम् अविनाशिनीम्-अप्रच्युतस्थिरैकरूपा, जातिं न कोऽपि, परावर्तयितुं-शूद्रा जातिं क्षत्रिया विधातुं, समर्थः । जातेर्नित्यत्वात् न तत्परावर्तनं भवतीति भावः । ननु 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इति प्रामाण्यात् क्षतात्त्रिाणकर्तृत्वरूपा कर्मानुसारिणी क्षत्रियजातिः सिध्यतु । चातुर्वर्ण्यमस्यार्थं भावः । गुणकर्मविभागेन चातुर्वर्ण्यं सृष्टमिति चेन्न, चातुर्वर्ण्य-मित्यस्याभिप्रायापरिज्ञानात् । तच्चेवम्-चातुर्वर्ण्यस्य सृष्टौ कर्तृत्वं कस्येत्याकाङ्क्षायां मयेति पदघोष्यस्य ईश्वरस्येति भवद्भिरपि वक्तव्यम् । अन्यथा मयेत्यनर्थकं स्यात्, गुणकर्मणोरचेतनत्वेन चातुर्वर्ण्योत्पादने सामर्थ्याभावाच्च । मया कृष्णेन जगन्नियन्त्रा ईश्वरेण गुणकर्मणी विभज्य चातुर्वर्ण्यं सृष्टम् । यथा दयादाक्षिण्यादयः स्वाभाविका गुणाः, यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहाः कर्माणि ब्राह्मणानाम् । एवं क्षत्रियादीनामपि गुणकर्मणी विभक्ते एव । एतदंशे एवास्य तात्पर्यम् । किञ्च—यदि कर्मानुसारिण्येव जातिरित्यभिनिवेश-स्तदा जीवस्य गर्भागमनसमये पूर्वजन्मकालिकं कर्मादायेव ॥ ।

वा रंको वा होइ एवं चेव पुव्वकम्मणो पहावेण
वा रङ्को वा, भवति, एवमेव पूर्वकर्मणः प्रभावेण
बम्हणो वा छत्तिओ वा सुद्दो वा होइ। पुव्वकम्मा-
ब्राह्मणो वा क्षत्रियो वा शूद्रो वा भवति। पूर्वकर्मा-
णुगया णिच्चा जाईं ण कोऽवि पराबट्टिउं समत्थो।
नुगता नित्या जातिं न कोऽपि परावर्तितुं समर्थः।

---

जातो जीवः समुत्पद्यते इति जायमानो बालो ब्राह्मणः क्षत्रिय इति व्यवह्रियते। उक्तं हि छान्दोग्ये पञ्चमेऽनुवाके। तद्यथा "इह रमणीयचरणाभ्यासो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। अथ य इह कपूयचरणाभ्यासो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा।" इति। एतदेवाभिप्रेत्य न्यायदर्शनसूत्रेऽप्युक्तम्—"पूर्वकृतफलानुबन्धात्तदुत्पत्तिः" इति। मनुनाऽप्येवमेवोक्तम्—"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्"। इत्यनाशे एवास्य भावः संभवति न तु जायमानस्य ब्राह्मणादेः परावर्तने। किंच-गुणकर्मणोश्चातुर्वर्ण्येन सह कः सम्बन्ध इति जिज्ञासायां द्रव्यद्रव्ययोरेव संयोग इति नियमेन संयोगाभावाद्, अवयवावयविनोरिव गुणगुणिनोः क्रियाक्रियावतोश्च नित्यः समवाय एव संबन्ध इति मन्तव्यम्। ततश्च ब्राह्मणगुणानां न ब्राह्मणात्पार्थक्येनावस्थानं संभवति। एवं च ब्राह्मणोत्पत्तिसहकृता एव ब्राह्मणगुणा उत्पद्यन्ते, नहि दयादाक्षिण्यादयो गुणा आत्मगताः सन्तो ब्राह्मणस्यात्मन उत्पत्त्यनन्तरं स्थापयितुं शक्यन्ते। नापि विभिन्नगतास्ते गुणा इति कथमपि साधयितुं पार्यते। नापि ब्राह्मणस्यात्मनि अविद्यमाना गुणा अन्यस्थानादागत्य ब्राह्मणत्वं साधयन्ति। किन्तु सहैव गुणाः समुत्पन्नाः, एवं कर्मापि। अन्यकर्मकर्तृत्वे तु अनधिकारचर्चैव विधीयते ननु ब्राह्मणत्वं विहन्यते। अत एव अष्टवर्षं ब्राह्मणमुपनयीत तं चाध्यापयीत इत्यादि समगच्छते। इत्यलमत्र बहूक्तेन, इति प्रासङ्गिकत्वात्समयोपयोगाद् व्याख्यातम्। अथ प्रकृतमनुसरामः।

प्रता०—साधु साधु! विद्वद्भिर्युक्तियुक्तं शास्त्रमर्यादानुगतमेवोक्तम्। ततस्ततः।

भद्र०—तओ तेहिं बम्हणेहिं कहियं, जहा तुमं दाणप्पहावेण
ततस्तैर्ब्राह्मणैः कथितं, यथा त्वं दानप्रभावेण
राया भूओ एव्वं चेव विवेअपरिच्चाएण कपूआ-
राजा भूतः, एवमेव विवेकपरित्यागेन कपूया-
यरणेण मिलिच्छो जाओ। अओ पुव्वकम्मप्पहावस्स
चरणेन म्लेच्छो जातः। अतः पूर्वकर्मप्रभावस्य

---

प्रतापः कथयति—विद्वद्भिः-श्रुतिस्मृतिपुराणतत्त्वज्ञैः, अत्र बहुत्वात् सर्वैरप्येकमत्येनउक्तमिति बुध्यते, युक्त्या युक्तं-तर्कस्यानुकूलम्, शास्त्राणां-श्रुतिस्मृतिपुराणानां, मर्यादायाः-आप्तपुरुषव्यवहारस्य च अनुकूलमेवाभिहितम्, न खलु तेषामुक्त्या शास्त्राण्याप्तव्यवहारश्च भिद्यन्ते इति। 'आप्तवचनं वेदाश्च प्रमाण'मिति वदता न्यायसूत्रकारेण आप्तवचनस्य वेदस्यप्रामाण्यं स्वीकृतमिति तैर्विद्वद्भिरपि तदनुकूलमेवोक्तमित्यर्थः। दानप्रभावेणेति। प्रत्येककर्मणो विभिन्नफलजनकत्वाद् दानकर्मणः फलं धनिनां कुले समुत्पत्तिः।

ननु दानादिशुभाध्यवसायवशाद् यथा राजराजेश्वरस्य गृहे जन्म एवमेव तस्मादेव शुभाध्यवसायाद् ब्राह्मणस्य क्षत्रियस्य वा गृहे जन्म कथं न जातमिति तद्विविच्य दर्शयति—

विवेकपरित्यागेनेति। विवेकस्य भक्ष्याभक्ष्यादिविचारस्य परित्यागेन। कपूयेति। कपूयानां दुष्कर्मणामाचरणेन म्लेच्छो म्लेच्छजातीयो यवनो जातः। अतः पूर्वकर्मेति। पूर्वजन्मनि कृतस्य कर्मणः प्रभावस्य अस्मिन् यवनशरीरे विद्यमानत्वान् अनेन यवनशरीरेण क्षत्रियो न भविष्यसि। ननु-"अङ्गीकारेण शान्तीनां ब्राह्मणानुग्रहेण च। पूयन्ते तत्र पापिष्ठा महापातकिनोऽपि ये" इति वचनप्रमाण्यात्प्रायश्चित्तादिना शुद्धिद्वारा तस्य क्षत्रियत्वमस्तु इति चेन्न, अङ्गीकारेणेति वचनस्यात्रांशेऽसंबन्धात्। तथा हि अभक्ष्यभक्षणे अगम्यागमने च कृते सति ज्ञातिभिः

इमस्सिं सरीरम्मि विज्जमाणत्तेण अणेण सरीरेण
अस्मिन् शरीरे विद्यमानत्वेन अनेन शरीरेण
छत्तिओ ण होइस्ससि।
क्षत्रियो न भविष्यसि।

प्रता०—साधु, साधु, अद्यापि निःस्पृहाः सत्यैकनिष्ठा ब्राह्मणाः सन्ति। ततस्ततः।

भद्र०—जदा बहुलोहद्दंसणप्पगारेण वि बम्हणा ण सत्थविमुहा
यदा बहुलोमदर्शनप्रकारेणापि ब्राह्मणा न शास्त्रविमुखा
जाआ तदा अकबरो छत्तिएहिं सह संबंधिदुं उज्जुत्तो
जाताः तदा अकबरः क्षत्रियैः सह संबन्धितुमुद्युक्तः।

---

परित्यक्तस्य महापातकिनः प्रायश्चित्तादिना शुद्धौ ब्राह्मणैरनुग्रहबुद्धया आमन्त्रणनिमन्त्रणस्वीकारादिना सत्संग्रहे कृते ज्ञातिभिः सहभोजनादिना तत्स्वीकारे च कृते महापातकिनः शुद्धिरित्यत्रैव तात्पर्यं न तु पूर्वजन्मकृतपापप्रभावेण समुत्पन्नस्य शुद्धिरपि बोध्यते। किंच ज्ञातिभिः परित्यक्तस्यैव ज्ञातिभिरङ्गीकारो विधीयते, न तु ज्ञात्यपरित्यक्तस्य अन्यज्ञातिसमुत्पन्नस्यापि। अपि च यवनज्ञातिसमुत्पन्नस्य स्वसमानज्ञातिभिरेव स्वीकरणं विधीयते नतु विजातिभिः। अन्यच्च-पातकित्वमपि तस्य न सिध्यति, किमुत महापातकित्वम्। तथा हि—कपूयाचरणपातकप्रभावात् यवनकुले समुत्पत्तिरिति तत्पातकफलभोगस्तु जात एव। पातकफलभोगानन्तरं पापस्यैवाभावात्, न खलु विहितापराधदण्डभोगानन्तरमपि दण्डः संभवति। अतो म्लेच्छज्ञातिसमुत्पादकपापस्य म्लेच्छजातौ उत्पत्तेस्तत्फलभोगेन तत्पापस्य नाशात्किंकृतं प्रायश्चित्तं स्यादिति न प्रायश्चित्तादिना क्षत्रियो भवितुमर्हतीति तात्पर्यार्थः।

बहुलोमेति। राज्यदानमानादिलोमदर्शनस्य प्रकारेणापि यदा ब्राह्मणाः ब्रह्म वेदस्तज्जानन्तीति ब्राह्मणाः, वेदार्थतत्त्वज्ञाः शास्त्रविमुखाः शास्त्रमर्यादापराङ्मुखा न जाताः। यद्वा शस्त्रविमुखा इति। अपिशब्दो भिन्नक्रमः शस्त्रविमुखा अपि। शस्त्रेभ्यो विमुखाः मरणपराङ्मुखा अपि

मानं विहाय यदि जीवसि तर्हि नार्यो
लोकास्त्वदीयचरितानि कथं स्मरेयुः ॥७॥

ततस्तत.—

भद्र० तओ इओ रज्जलोहाओ विणिक्कंतो सअरसीहो
तत इतो राज्यलोभाद्विनिष्क्रान्तः सगरसिंहः
मिलिच्छाहिरायं उवगओ।
म्लेच्छाधिराजमुपगत.।

प्रता०—श्रुतमेतत्। ततस्ततः—

भद्र०—तओ तेण भोदीयपयाजणवट्टमाणो सअलो वि वुत्तंतो
ततस्तेन भवदीयप्रजाजनवर्तमानः सकलोऽपि वृत्तान्तः
कहिओ, तं सोऊण पडिण्णायं मिलिच्छराएण।
कथितः, त श्रुत्वा प्रतिज्ञात म्लेच्छराजेन।
तुमं चेय मेवाडदेसाहिवइं करिस्सामित्ति।
त्वामेव मेवाडदेशाधिपतिं करिष्यामीति।

---

म्लेच्छराजस्याकबरस्य, अनुवर्त्तनेन-अनुयायितया देशदास्यतासम्पादनेन, कियत्-कियत्परिमित, धन स्यात्, देशदास्यतासम्पादनापेक्षया बहुतरमपि धनमल्पमेवेति भाव। अथ मानशून्यस्य आर्यस्य जीवनमपि न संभवतीति कथयति। यदि त्वं मानं क्षत्रियत्वाभिमान विहाय त्यक्त्वा जीवसि तर्हि नार्यः, आर्यो नासि। अथवा न आर्यो नार्यः, नार्थे नञ्, किन्तु निषेधार्थको न शब्दः। अनार्योऽसीत्यर्थः। न खलु मान परित्यज्य आर्या जीवन्तीति भावः। अथवा मानपरित्यागेन मानसिंहेति नाम्यपि मानपदपरित्यागात् यदि जीवसि—यदि ते स्थितिर्भवति, तर्हि नार्य· किंतु कार्याकार्यविवेकशून्यः क्रूरप्रकृतिकः सिंहः पशुरेवासीत्यर्थः। अथ भाविनि कालेऽपि तव दुर्यश इति प्रदर्शयति–लोका जनास्त्वदीयचरितानि कथं स्मरेयुः त्वदीयचरितानि गर्हिततया स्मरिष्यन्तीति भावः। 'विभाषा कथमि लिङ् च' इति भविष्यदर्थे गर्हाया लिङ् ॥ ७ ॥

प्रता०—( सक्रोधम् )

रे नीचाधिप ! चिन्तयात्मकुशलं न स्थास्यसि त्वं चिरं
कृत्तां मन्निशितासिना स्वपृतनां श्रुत्वैव संधक्ष्यसे।
यच्छक्ति मिलितः प्रतापविजयस्त्वज्जय्यतानिर्गतो
वीराणामधिपः स जीवति, कथं मेवाडमीक्षिष्यसे ॥ ८ ॥

ततस्ततः—

भट्ट०—तओ सो सयरसीहो तव्वयणं बहु मण्णंतो अप्पाणं
ततः स सगरसिंहस्तद्वचनं बहु मन्यमानः आत्मानं

---

प्रतिज्ञातमिति। प्रतिज्ञापूर्वं कथितम्, किं प्रतिज्ञातमिति तत्स्वरूपं दर्शयति–त्वामेवेत्यादि।

अथ मेवाडदेशस्याधिपतिं करिष्यामीति श्रवणतः सक्रोधं कथयति प्रतापः—रे नीचाधिपेति। रे इति असदामन्त्रणे। नीचाना–नीचप्रकृतिकाना, मानसिंहसगरसिंहादीनाम्, अथ वा–नीचाना नीचजातीययवनादिशूद्राणाम् अधिपः, न तु आर्यब्राह्मणादिहिन्दूनामप्यधिपस्त्वमिति भावः। तत्संबुद्धौ हे नीचाधिप! आत्मकुशलं–स्वकुशलं, चिन्तय–स्वकुशलस्य सदसत्ता विचारय। त्वं चिरं–बहुकालं, न स्थास्यसि–न जीविष्यसीत्यर्थः। कथमिति चेद् दर्शयति। मम निशितेन–तीक्ष्णेन, असिना–खड्गेन, कृत्ता–छिन्ना, स्वपृतना–स्वकीयसेना, श्रुत्वैव–श्रवणमात्र एव, संधक्ष्यसे–दग्धान्तःकरणः सन् मृतो भविष्यसि। तत्र हेतुं प्रदर्शयति। यत्–यस्मात्कारणात् शक्ति–शक्तिसिंहम्, अथ च प्रभावोत्साहमन्त्रजा शक्ति, मिलितः–संगतः, मिलित इत्यत्र गत्यर्थत्वात्कर्तरि प्रत्ययः। प्रतापविजयः तस्मात्कारणात्त्वज्जय्यतानिर्गतः, जेतु शक्यः–जय्यः, तस्य भावो जय्यता ततो निर्गतः, जेतु शक्यताया बहिर्भूतः, वीराणामधिपः–वीराधिपतिः, सः प्रसिद्धः, प्रतापविजयः जीवति, त्वं मेवाडं कथम् ईक्षिष्यसे। प्रतापे जीवति सति ते मेवाडदर्शनमपि न संभवति कुतस्तज्जय इति भाव. ॥ ८ ॥

तत इति। तदनन्तरं, स सगरसिंहः, तद्वचनं–तस्य अकबरस्य वचनं, बहु मन्यमानः–यथा अनेन प्रतिज्ञातं तथैवायं करिष्यति, मा

तअट्ठे समप्पियवतो । तअणु मिलिच्छाहिराएण
तदर्थे समर्पितवान् । तदनु म्लेच्छाधिराजेन
चित्तोरप्पदेसस्स दुग्गो तस्स दिन्नो । अओ पर भवन्तो
चित्तोरप्रदेशस्य दुर्गस्तस्मै दत्तः । अत पर भवन्त
पमाण ।
पमाणम्
( ततो निष्क्रान्तो भद्रमुखः । )
( मनसि )

प्रता०—रे क्षत्रियापसद ! कुकरवृत्तिमात्रो
नीचाश्रितोऽसि परिहाय निजप्रभावम् ।
नाहं तव स्मृतिपथ समुपागतः स्या
मात्मीयतातचरितं तु कथ स्मृतं न ॥ ९ ॥

रे रे कातर ! दुर्विदग्ध ! कुमते ! भेदैकवाचस्पते !
मद्दुर्धर्षसुवीरविक्रमभिया किं लीयसे स्वक्षितौ ।

---

मेवाडाधिपतिं विधास्यतीति तदाशय । आत्मान स्व तदर्थं म्लेच्छाधिपतये समर्पितवान्, तदाश्रता स्वीकृतवान् । तदनु इत्यादि सुगमम् ।

प्रताप मनसि कथयति-रे क्षत्रियेति । क्षत्रियेष्वपसद नितरा हीनस्तत्सम्बुद्धौ, रे क्षत्रियाधम ! कुक्कुरवृत्ति स्ववृत्तिमात्र सन्, निजप्रभाव-स्वप्रतिष्ठा, परिहाय त्यक्त्वा, नीचाश्रितोऽसि शूद्रजातीय म्लेच्छराजमाश्रित्य स्थितोऽसीत्यर्थं । अह तव स्मृतिपथ-स्मरणविषयता, न समुपागत' स्याम्, आत्मीयतातचरितं-परमशौर्यशालितया सुप्रसिद्धम् आत्मीयतातस्य श्रीपूज्यसागारयतातचरणस्य चरितम्, यो हि एकाशातिव्रणैर्जर्जरितोऽपि स्वाधीनता न त्यक्तवानित्यादि तु कथ न स्मृतम्, त्वया दृष्टमेव तच्चरित स्मृतिपथ कथ न नीतमित्यर्थ ॥ ९ ॥

रे रे कातरेति । रे रे कातर ! रे भीरो !, रे दुर्विदग्ध ! रे कुमते ! दुष्टमते !, रे भेदैकवाचस्पते ! भेदे परस्परभ्रात्रादीना विभिन्नतावैरादिसपादने एकोऽद्वितीयो वाचस्पतिः, तत्सम्बुद्धौ, भेदोत्पादने परमबुद्धिशालिन् ! मम दुर्धर्षा —परमशौर्यशालितया दुर्जयाः, ये सुवीरा —

धिक् त्वां यत्समरे ममैव कुलजं योद्धुं नियुङ्क्ते भयाच्
चित्तोरं नच रक्षितुं प्रभवसि त्वं तु प्रतापोन्मुखः ॥१०॥

परमयं सगरसिंहः कथं समुपगतः।

( पुनर्विचिन्त्य )

अस्तु। सगरसिंहस्यास्मत्पितृव्यस्यैवाधिकारे चित्तोर-दुर्गं इत्यात्मवंशे एव, ततो नाहं यावत्सगरसिंहं तं परावर्तयितुं यतिष्ये।

तत्परावर्तने वंशे वैरभावः समुज्ज्वलेत्।
दोषः पितृव्यघाते स्यात् तस्मात्तत्रैव तिष्ठतु ॥ ११ ॥

---

परमात्तमधीराः तेषां विक्रमभिया-पराक्रमभयात्, स्वक्षितौ-स्वकीयभूमौ, किं लीयसे। स्वनिवासं विहाय बहिरागत्य युद्धाय किं न सज्जीभवसि। यत्-यस्मात्कारणात्, त्वं प्रतापोन्मुखः-प्रतापसंमुखस्थितः, चित्तोरं-चित्रपुरनामकं दुर्गं रक्षितुं न प्रभवसि, तद्रक्षणे न समर्थो भवसि तत् तस्मात्कारणान्मे मम वैरविधौ ममैव पितृव्यत्वात्पूज्यं कुलजं पितामहपुत्रं सगरसिंहं योद्धुं भयाद् नियुङ्क्ते-नियोजयसि। यवनहस्ता-च्चित्तोरदुर्गोद्धार आवश्यकः, तदुद्धारे पितृव्य एव परिपन्थीत्यसम-ञ्जसमेव ॥ १० ॥

पुनरिति। यवनहस्ताच्चित्तोरदुर्गोद्धार इत्येवास्मत्कर्तव्यं तत्तु निष्पन्न-मेवेति पुनर्विचिन्त्य मनसि कथयतीत्यध्याहार्यम्। अथ विचारस्वरूपं प्रदर्शयति—सगरसिंहस्येत्यादि सुगमम्।

तत्परावर्तने इति। तस्य-चित्तोरदुर्गस्य, परावर्तने-सगरहस्तादुद्धृत्य स्वायत्तीकरणे, वंशे-स्वकीये एव वंशे वैरभावः समुज्ज्वलेत्, संभावनायां लिङ्। सगरविनाशे केचित्तत्पक्ष-पातिनो वैराविष्यन्ते इत्यर्थः। किञ्च-पितृव्यस्य, घाते-मारणे, दोषः स्यात्, पितृव्यमारणे महापातकं च संपद्येत। तस्मात् वंशे वैरभयात्पि-

( अथोपतिष्ठते दौवारिकः । )

दौवा०—जेदु जेदु महाराओ ।

जयतु जयतु महाराजः ।

प्रता०—किमस्ति ।

दौवा०—कएणराउतकन्हपुरोहिआइआ दुवारि समुवट्ठिया ।

कर्णरावतकृष्णपुरोहितादिका द्वारि समुपस्थिताः ।

तत्थ भवंतं दट्ठुं अहिलसन्ति ।

तत्र भवन्तं द्रष्टुमभिलषन्ति ।

( प्रतापः स्वयं द्वारि समुपतिष्ठते । सर्वान्सानुनय प्रवेशयति । 'विजयतामेकलिङ्गेश्वर इति परस्परमभिब्रुवन्ति । ततो यथास्थानं सर्वे उपविशन्ति । )

प्रता०—किमाज्ञापयितुमनुगृहीतोऽयं जनः ।

पुरोहितः—राज्यपीठाधिरोहणानन्तरं प्रथमपर्वसंप्राप्तौ आखेटार्थं गन्तव्यमेव खलु कुलाचारः, तत्राखेटलाभालाभाभ्यां भाविशुभाशुभकल्पनं क्रियते । अतोऽद्य भवद्भिराखेटार्थं गन्तव्यम् ।

प्रता०—यथा भवतामाज्ञा ।

( ततः सर्वे उत्तिष्ठन्ति । द्वारि समुपतिष्ठन्ते । )

प्रता०-दौवारिक ! आखेटे गन्तव्यमिति चेतार्कं सज्जीकारय ।

---

तृष्यमाणप्रायश्चित्तभयाच्च तत्रैव अस्मद्‌ शौर्ये सगरसविधे एव तिष्ठतु । एतेन अस्मदभीष्टसिद्धिरपि सम्पद्यते एव ॥ ११ ॥

विजयतामिति । विजयतामेकलिङ्गेश्वरः स्वामीष्टदेवता एकलिङ्गेश्वरः सर्वोत्कृष्टतया वर्तताम् । अशनिना हृदयेऽपि तव वासो भवतु न ते त्वत्तः पराङ्मुखा भवन्त्विति तात्पर्यार्थः । एतेन स्वामीष्टदेवताया विजयप्रार्थनं न विरुध्यते । कुलाचार इति । एतेन तत्करणमावश्यकमिति व्यज्यते ।

दौ०—जं देवो आणवेदि ।
यद्देव आज्ञापयति ।

( इति निष्क्रम्य अश्वपरिचारकमाज्ञाप्य यथास्थानं स्थितः । )

( सालुम्बादयः चेतकं प्रशंसन्ति । )

सालुम्बः—अत्युत्तमस्ते चेतकः अहमेवं मन्ये ।

हरेर्हयेभ्यो हरितां परिक्रमे विनिर्गतो ऽसौ तव चेतको हयः ।
हरित्सवर्णो हरिवंशनायकं भवन्तमाराद्भुवमुपागतो भवेत्॥१२॥

शक्ति०—महाराज ! चंचूर्यमाणं तस्य मुखं दृष्ट्वा अहमेवं संभावयामि ।

कथं क्षमायाः क्षणमात्रतः क्रमे
भवेन्नु मे सिद्धिरितीव चेतकः ।
चलाचलप्रोथपदेन मारुता-
त्मजस्य मन्त्रं जपतीव सन्ततम् ॥ १३ ॥

---

हरेरिति । हरितां-दिशां, परिक्रमे-परिक्रमणसमये, हरेः-सूर्यस्य हयेभ्यः अश्वेभ्यः, विनिर्गतः-सूर्यरथाद् बहिर्भूतः, हरित्सवर्णः-हरितां दिशां समानवर्णः, दिक्सदृशनीलवर्णोपलक्षितः, अयं-चेतकाख्यो हयः हरिवंशस्य नायकं-हरिवंशनायकं सूर्यवंशश्रेष्ठं, भवन्तम् आराद्धुं-सेवितुम्, भुवं-पृथिवीम्, उपागतो भवेत्, संभावनायां लिङ् । सूर्याश्वानां हरिद्वर्णोपेतत्वात्तस्यैवासौ अश्व इति मे प्रतिभाति । तीव्रगतित्वात् सूर्याश्वानामिव वर्णोपेतत्वात् सूर्याश्वत्वेन उत्प्रेक्षापूर्वको निश्चयः ॥ १२ ॥

अश्वो मुहुः नासिकोष्ठं चालयतीत्यश्वस्वभाव एव । तदवलोक्य उत्प्रेक्षमाणः शक्तिसिंहः प्रतापं संबोध्य कथयति—कथं क्षमाया इति । क्षणमात्रतः-क्षणमात्रेण, क्षमायाः-पृथिव्याः क्रमे-क्रमणे, मे-मम सिद्धिः कथन्नु भवेत्, इतीवेति । इति हेतोरिव, चेतकः चलाचलप्रोथपदेन-नितान्तचञ्चलनासिकोष्ठस्थानेन, मारुतात्मजस्य-हनुमतः, मन्त्रं, सन्ततम्-अविरतं, जपति इव । 'चलनं कम्पनं कम्प्रं चलं लोलं

रावतकृष्णः—महाराज !

पदे समुत्थाप्य तव द्विपो गलं
ग्रहीतुमिच्छन्निव खं विगाहते,
पुनश्च तत्र त्वनवाप्य ते रिपुं
रसातलं शोधयितुं समीहते ॥ १४ ॥

पुरो०—साधु रावतकृष्ण ! साधु । अनिर्वचनीयोऽस्य चरणव्यापारः—

मत्स्वामिप्रतिपक्षमङ्ककुहरे कञ्चिन्निलीय स्थिता
गोत्रा गोरिपवे ददाति निभृतं धान्यं धनं भूरिशः ।

---

इत्यमरः । 'घोणा तु प्रोथमस्त्रियाम्' इति चामरः । चञ्चल नासिकोष्ठस्थानमवलोक्योत्प्रेक्षते, मारुततुल्यवेगवतो मारुतात्मजस्य प्रजविरवसिद्धये आराधनामयं करोतीति भावः ॥ १३ ॥

अथ रावतकृष्णश्चेतकाश्वस्य चेष्टामवगत्य तदवगतये प्रतापमुन्मुखीकरोति—पदे इति । असौ चेतकः, पदे-हस्तस्थानीयौ चरणौ 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । समुत्थाप्य तव, द्विपः—शत्रोः, गलं—कण्ठदेशं, ग्रहीतुम्-उपादातुम्, इच्छन्निव, खम्—आकाशं, विगाहते । अत्र तव शत्रोर्गलग्रहेच्छयैव आकाशे पदे उत्थापयतीति भावः । अथ तव शत्रूणां युद्धत्यागेन पलायनानन्तरं मृतानामन्तरिक्षेऽप्राप्तेरस्य चेष्टान्तरमाह । अथापि आकाशे गमनानन्तरमपि, तत्र तु-आकाशे तु, त्वदीयं रिपुम्, अनवाप्य-अप्राप्य, पुनः, रसातलं-पृथ्वीतलं, शोधयितुं, समीहते-चेष्टां करोति । पादाचरणेन अधोगामिनं तं शत्रुमन्वेषयतीत्यर्थः ॥ १४ ॥

अथ पुरोहितो रावतकृष्णोक्तिमनुमोदयन्पादकुट्टनं वर्णयति—मत्स्वामीति । गास्त्रायते इति गोत्रा-पृथिवी, कञ्चन-अनिर्वचनीयं धर्मविरुद्धाचारित्वादग्राह्यनामानं, मत्स्वामिप्रतिपक्षं-मम स्वामिनः प्रतिपक्षभूतं यवनम्, अङ्ककुहरे-क्रोडरूपे विवरे, निलीय-निह्नुत्य, स्थिता सती, 'यवना मृता भूमौ निखन्यन्ते' इति यवनानामाचारस्तदेवाश्रित्यो-

इत्यस्या जडतां निरीक्ष्य बहुशः क्रोधादिमां क्षोभयन्
पादात्कुट्टति शिक्षयन्त्यपि जडे मैवं विदध्याः पुनः ॥ १५ ॥

प्रताप—एवमेवैतत् ।

( ततो निर्गच्छन्ति सर्वे । )

( पटोन्नयनम् )

( आखेटमाचर्य एकत्रोपविशन्ति । )

( ततः प्रविशति आरण्यकप्रबन्धकर्ता सेनापतिः । )

सेनापति.—जयतु जयतु महाराजः ।

प्रता०—कथय आरण्यकानां वृत्तान्तम् ।

सेना०—

त्वदीयमाखेटकयानवृत्तं श्रुत्वैव भीता सहजं विरोधम् ।
हित्वा समुद्विग्नहृदश्च सर्वे पलायिता वन्यमृगाः समन्तात् ॥१६॥

---

प्रेक्षवे-निलीय स्थिता गोत्रा, गोरिपवे-गवां शत्रवे यवनाय, निभृत-विनीतं यथास्यात्तथा 'वश्यः प्रणेयो निभृतविनीतप्रश्रयाः समाः ' इत्यमरः। भूरिशः धान्यं व्रीह्यादिकं धनं स्वर्णरजतादिकं ददाति । इत्येतत्स्वरूपां 'यद् इयं गोत्रा गोरिपवे धनं धान्यं ददाती' तिस्वरूपाम्, अस्याः—पृथिव्याः, जडतां मूर्खतां, निरीक्ष्य, क्रोधादिमां गोत्रां, क्षोभयन्—सन्त्रासयन्, हे जडे-मूर्खे, पुनरेवं मा विदध्याः इति शिक्षयन्—बोधयन्सन्, पादात्कुट्टति—ताडयति । नायं माङ् किं तु निषेधार्थको माशब्दस्ततो लुङ् न । यवनानुकूलाचरणादिमां पृथिवीमयं कुट्टतीति भावः ॥ १४ ॥

ततः इत्यादि सर्वं सुगमम् ।

अथ सेनापतिराखेटवृत्तान्तं वर्णयति—त्वदीयेति । त्वदीय—त्वत्सम्बन्धि, आखेटकयानवृत्तम्—मृगयागमनवृत्तान्तं, श्रुत्वैव—आकर्ण्यैव, नत्ववलोक्येति भावः, भीताः—त्रस्ताः, समुद्विग्नं हृदयं येषां ते तथा—भयोद्विग्नमानसाश्च, सर्वे वन्यमृगाः—सिंहवराहशशमृगादयः, सहजं विरोधं—स्वाभाविकं गोव्याघ्रादिसम्बन्धिनं वैरभावं, हित्वा त्यक्त्वा,

किं बहुना—

एकः खे द्विजराजमध्यमहितः सुस्थो मृगो मोदते
बर्ही शक्तिधरस्य राजति सुखी हंसो गिरः शोभते ।
शेते शैलसुताहरिर्गजमुखः क्रीडत्युमाङ्कान्तरे
यान्त्यन्ये भयतो दिशोऽपि विदिशः सर्वेऽप्यरण्योद्भवाः ॥१७॥

---

समन्तात् पलायिताः । भयान्न कश्चिदपि विरोधिनमवलोकयतीति संभूय सर्वे गच्छन्तीति भावः । एतेनास्य प्रतापातिशयो बोध्यते ॥ १६ ॥

अथाखेटबहिर्भूतान्मृगान् दर्शयति । एकः इति । एकः केवलः,'एको मुख्यान्यकेवलाः' इत्यमरः । खे-आकाशे, द्विजराजश्चन्द्रस्तस्य मध्ये महितः पूजितो, मृगः, सुस्थः भयादिरहितः सन्, मोदते-आनन्दति, तत्र तव गमनाभावान्न तस्य भयमस्तीत्यर्थः । तथा अन्यः, शक्तिधरस्य-स्वामिकार्तिकस्य बर्ही-मयूरः, सुखी राजति, स्वामिकार्तिकस्य संबन्धान्न तस्य भयमस्तीति भावः । तथा अपरः गिरः-सरस्वत्याः, हंसः शोभते । देहलीदीपकन्यायात् सुखी इति उभयत्र संबध्यते । तथा एकः शैलसुतायाः, हरिः-सिंहः, शेते, सुखावस्थाया शयनमिति सिंहस्वभावः । तथा एको गजमुखः-गजाननः, गजमुखत्वाद्भयकारणं सूच्यते । उमाङ्कान्तरे-पार्वत्याः क्रोडमध्ये, क्रीडति, सोऽपि तत्रैव स्थितो न पुनर्बहिः क्रीडति । एतेषां दैविकशक्तिसम्बन्धात् भवता तत्र गमनाभावाच्च न भयमस्तीति भावः । अन्ये सर्वेऽपि अरण्योद्भवाः पशुपक्षिसरीसृपादयो भयतः—भीत्या दिशोऽपि—सुरक्षितमार्गादपि, विदिशो-विरुद्धमार्गान्, यान्ति । एष एवाखेटप्रकारः । यदेका दिक् पन्था वा तेषां पलायनार्थं मुच्यते, ततश्च प्रारब्धरहिता विदिशोऽनुधावन्तीति न तेषां हनने दोष इति तात्पर्यार्थः ॥१७॥

---

तत्र—

भवन्मौर्वीशब्दं भयविहितदीनार्तनिनदा
निशम्यालोक्य स्वान्सुतगृहकलत्रप्रियजनान् ।
मृगाश्चाशाद् गन्तु सजलनयनाश्चातिविरहात्
समायातु प्रेम्णा स्थितिमभिलपन्तो ददृशिरे ॥ १८ ॥

( ततः प्रविशति आरण्यकवृत्तान्तपरिज्ञानाय प्रेषितश्चरः । )

चरः—जयतु जयतु महाराजः ।

प्रता०—कथय तावदारण्यकानां वृत्तान्तम् ।

चरः—किं नाम तेषु वक्तव्यम्—

फेरुर्घोरे सघनगहने पादयुग्मे निपण्णः
किंचिच्चोर्ध्वं समुदिततनुर्द्रष्टुमीहां विधत्ते ।
फेत्कुर्वंस्त्वान् खलु मृगयते स्थानतः स्थानमन्यत्
गच्छन् स्वेषु व्रजति सहसा वाशितस्य क्रमेण ॥ १९ ॥

अपि च—

बर्हो स्वकेषां परिरक्षणाय प्रसादयन्नृत्यति कानने त्वाम् ।
जात्याऽप्यवध्यत्वमसौ ततोऽगात्केकासमुद्घोषितसाधुवादः ॥२०॥

किञ्च हंसाः

चुं-चुं-कृतं तनयमात्मभिया विहाय
गच्छन् विहायसि परिक्रमिमातनोति ।
भूयश्च सन्निहितशालिनि वर्तमानो
हंसः स्तवीति तव कारुणिकप्रवृत्तिम् ॥ २१ ॥

तत्र विचित्रैव दशा मृगराजस्य । यथा—

सिंहो मत्तगजेन्द्रकुम्भदलने नासेवते विक्रमं
क्रोडायातमपि क्षुधासहृदयो नो हन्ति तद् धेनुकम् ।
नादत्ते सलिलं च शुष्करसनो घर्माकुलो विह्वलः,
किन्तु त्राणमनाप्य घोरविपिने भीत्या परिभ्राम्यति ॥२२॥

गजस्तु—

नागो नैव सरोरुहेषु विचरत्याभ्रान्तचित्तो भिया
मन्दं मन्दमुपैति नीरकवनात्सम्यक् क्षुधार्तः कुलः ।
आलोक्यापि निजां प्रियां स्वनयने सोच्छ्वासमामीलयन्
निद्रोत्थं स्वमलङ्घितं मृगयते नीचं त्वनोचरितिः ॥२३॥

किं बहुना—

> व्यालो याति समूषकश्चटकिका श्येनान्विता निर्भया
> काकोलूककुलं परस्परमहो गोव्याघ्रमास्कन्दयत् ।
> तप्तः सूर्यकरैर्निषीदति शशो व्याघ्रोदरानातपे
> सर्वे प्राणभिया प्रयान्ति विदिशो नो शत्रुमाच्छिन्दते ॥२४॥

---

सुगमत्वान्न व्याख्यायन्ते । अन्याख्यश्लोकाः सरेषु प्रकाशिताः ।

अथ चरः आरण्यकानां वृत्तान्तं वर्णयति—फेरुरिति । फेरु—पादद्वयमात्रे स्थितः, किञ्चित्स्वल्पमेव, ऊर्ध्वमुपरिभागे, समुन्निता उन्नता, तनुः—शरीरं, यस्य सः, तथोक्तः सन्, द्रष्टुमीहा—चेष्टा, विधत्ते—करोतीत्यर्थः । अहमवलोकयेय मा न कश्चिदवलोकयत्विति किञ्चिद्देशोचितष्ठति, एष खलु शृगालदर्शनप्रकारः । तथा फेत्कुर्वन्—फेत्कारशब्दं कुर्वन्, स्थानतः—एकस्मात्स्थानात्, अन्यत्स्थानं गच्छन्सन्, स्वान्—शृगालान्, मृगयते—अन्वेषयति । वाशितस्य क्रमेण तिरश्चां शब्दानुसृत्या 'तिरश्चां वाशितं रुतम्' इत्यमरः । स्वेषु—स्वकीयेषु, शृगालसमूहे सहसा व्रजति-गच्छतीत्यर्थः । एष खलु शृगालस्वभावः, परस्परं शब्दं कुर्वन्तः शब्दानुसरणेन एकत्रामिलन्तीति भावः ॥ १६ ॥

अथ सर्वेषामारण्यानां संभूय दशां दर्शयति—व्याल इति । व्यालः—सर्पः, समूषकः—मूषकेण सहितः, याति । चटकिका—गृहादिष्ववस्थायिनी पक्षिणी, श्येनेन अन्विता सती निर्भया याति । स्त्रीणां स्वभावत एव भयं भवतीति चटकिकेत्युक्तम् । परं भवदाखेटभयापेक्षया स्वाभाविकमपि श्येनभयमल्पमेवेति श्येनान्विता याति । अथवा श्येनस्ततोऽप्यधिकतरभीतः प्रतिभातीति तेनान्विता याति, स्वयमयं भीतो न मां मारयिष्यतीति श्येनान्विता गच्छतीति भावः । एवं सर्वत्र तर्कणीयम् । चटकिकेत्यत्र 'उदीचामातः स्थाने॰' इति वैकल्पिक इकारः । अहो इत्याश्चर्ये, काकोलूकस्य कुलं गोव्याघ्रं च, परस्परम्-अन्योन्यमास्कन्दयत्—संमृद्नत्, याति । गोव्याघ्रमत्र 'येषां च विरोधः शाश्वतिकः' इत्येकवद्भावः । तथा सूर्यकरै-

रावतकृष्णः—

एवं च भवत्प्रतापसमुद्वेजितकिरितरक्षुशार्दूलकण्ठीरवभल्लूकलुलायखड्गिजम्बुकगोधेरशल्यवृककुरङ्गचीनचमूरुशम्बरगवयशशादिभिर्भयादितस्ततो भ्रमद्भिः क्रूरहिंस्रकसत्त्वैः समन्ततो व्याप्तमिवारण्यमिदानीं संपद्यते ।

---

स्ततः—घर्माकुलः, शशः व्याघ्रोदरस्य, अनातपे–छायायां, निषीदति। शशस्य स्वभाव एवायम्, यदयं गच्छन्नन्स्वल्पामपि छायामवलोक्य तत्रैव निषीदति। सर्वे–पक्षिसरीसृपजङ्गमादयः प्राणभिया–स्वप्राणभयेन, विदिशः–विरुद्धदिशः, प्रयान्ति गच्छन्ति, शत्रुं–रिपुं, नो आच्छिन्दते–नैव मारयन्तीत्यर्थः । आरण्यकानामत्यन्तभयजनकत्वात्तव प्रभावस्य लोकातिशयित्वं बोध्यते ॥ २४ ॥

एवं चेति । आरण्यकानां दिग्गामित्वेन तव प्रतापेन समुद्वेजितैः, किरीत्यारभ्य शशादिपर्यन्तस्य द्वन्द्वः तत्र किरिः–सूकरः, तरक्षुः–चित्रकः, चीता इति लोके प्रसिद्धः, शार्दूलः–व्याघ्रः, कण्ठीरवः–स्कन्धदेशे सटायुक्तः सिंहः, भल्लूकः–ऋक्षः, भालू इति लोके, लुलायः–महिषः, खड्गी–गण्डकः, गैंडा इति लोके, जम्बुकः–शृगालः, गोधेरः–गोह इति प्रसिद्धः पुंजातीयः सरीसृपः, शल्यः–सूच्याकारलोमा स्याह इति लोके प्रसिद्धः, वृकः–क्षुद्रगर्दभसमकायः अजाभक्षकः भेड़हा भेड़िया वेति लोके प्रसिद्धः, कुरङ्गः–मृगः, चीनः–अजासदृशो हरिणविशेषः, घोड़ इति लोके, चमूरुः–चित्रकबिन्दुयुक्तो हरिणविशेषः, शम्बरः–कृष्णवर्णो हरिणः, गवयो–गोसदृशो गलकम्बलरहितः पशुः, शशः प्रसिद्धः । अन्यत्सुगमम् ।

अथ प्रतापनिश्चयमाह—तर्हीत्यादि । यदि हिंस्रकसत्त्वैर्व्याप्तमरण्यमस्ति, तर्हि क्रूराः–दुष्टस्वभावाः ये वृकभल्लूकादयः, तथा हिंस्रकाः–हिंसनशीलाः, ये व्याघ्रादय आरण्यकास्तेषां, संशोधनाय–मारणार्थं, पुनरपि यतितव्यम्, यद्यपि पूर्वं संशोधितं परं नाद्यापि सर्वथा शुद्धं जातमिति पुनररि संशोधने यत्नः कर्तव्यः । एतेनास्य स्वभावे धैर्यमवगम्यते ।

प्रतापः—तर्हि क्रूरहिंस्रकसत्त्वानां संशोधनाय पुनरस्माभिः प्रयतितव्यम् ।

सालुम्बशक्तिप्रभृतयः—अवश्यमेव । सालुम्बः शृणु घुर्घुरायमाणः कोल इत एव आगच्छतीव ।

प्रतापशक्ती—साधु साधु, अस्माभिरप्यवगम्यते ।

अत्रान्तरे घुर्घुरघोररावी
कोलः समुद्वेजितवीरवर्गः ।
अरण्यगो मर्मरपर्णशब्दात्
प्रतापशक्त्योरथ लक्ष्यगोऽभूत् ॥ २५ ॥

प्रतापः—आकर्णमाकृष्य निशातबाणं
क्षिप्नोति कोले सहसा निहन्तुम् ।
अलक्षितः सन्स विभिद्य लक्ष्यं
जगाम भूमौ न च लक्षितोऽभूत् ॥ २६ ॥

---

अथ तत्रागतं वराहं वर्णयति—अत्रान्तर इति । अत्रान्तरे-अस्मिन्नवसरे, घुर्घुर इति, घोरं-भयंकरं, रवितुं शीलमस्येति घुर्घुरघोररावी, सम्यक् प्रकारेण उद्वेजितः, वीरवर्गः वीरसमूहः येन स तथा । कोलः-वराहः, शतशोऽश्वान् जङ्घान्तरे विदीर्य, एष खलु वराहस्वभावः, यदयं जङ्घान्तरे प्रविश्य अश्वानामण्डकोशं विदारयतीति, सत्कृत्वा । अथ प्रतापशक्त्योः-प्रतापसिंहशक्तिसिंहयोः 'भ्रातुर्ज्यायसः' इति प्रतापेत्यस्य पूर्वनिपातः । लक्ष्यगो लक्ष्यविषयोऽभूत् । प्रतापशक्तिभ्यां युगपद् दृष्ट इत्यर्थः ॥ २४ ॥

अथ वराहदर्शनानन्तरं तयोः कृत्यमाह—

आकर्णमिति । प्रतापः, निशातबाणं-तीक्ष्णबाणम्, आकर्णं कर्णपर्यन्तम्, आकृष्य सहसा कोले क्षिप्नोति, बाणेन वराहं जघानेत्यर्थः । अत्र आकर्णमाकर्षणेन वेगातिशयित्वं निशातत्वेन अप्रतिहतशक्तितया अन्तर्गा-

( शक्तिरपि कोलं लक्ष्यं विधाय बाणं मुञ्चति ।
स तु प्रतापबाणमार्गेणैव निर्गतः
कोलः घोरशब्दं विधाय मृतः । )

प्रतापः—(अरण्ये गत्वा मृतं कोलमवलोक्य स्वबाणमन्विष्यन् तमप्राप्य शक्तिबाणमुत्थापयति । )

शक्तिः—राजन् मया निहतः किरिः, मदीयोऽयं शरः इति मा ग्रहीः ।

प्रतापः—नहि २ मयैव किरिर्निहतः मौनमास्ताम् ।

---

मित्थं सूच्यते । सः बाणः प्रक्षेपक्षणमनन्तरमेव अलक्षितः सन्, लक्ष्यं वराहरूपं शरव्यं, विभिद्य तस्मान्तः प्रविश्य, भूमौ जगाम, तदनन्तरमपि न च लक्षितोऽभूत्, भूमावपि प्रविशन् नैव लक्षितो जात इत्यर्थः । वराहं विभिद्य भूमावन्तः प्रविष्ट इति तात्पर्यार्थः । एतेन लोकातिशय बलवत्त्वं प्रतापस्य व्यज्यन्ते ॥२६॥

अथ वराहतनोः प्रतापबाणनिःसरणानन्तरमाह—शक्तिसिंहोऽपि शरं मुञ्चति । येन मार्गेण प्रतापस्य शरो निःसृतस्तेनैव मार्गेण विनिर्गतोऽभूत् बहिर्विनिःसृतोऽभूत् । स लक्षितोऽपि, बहिर्निस्सरणसमये निःसरणानन्तरं च सर्वैर्दृष्ट इत्यर्थः । एतेन प्रतापबलापेक्षयाऽस्य स्वल्पबलवत्त्वं सूचितं भवति, यतो हि प्रतापशरो वराहं विभिद्य निर्गतोऽलक्षितश्च । शक्तिशरस्तु वराहशरीरमविभिद्य प्रतापशरनिर्मितमार्गेणैव निस्सृतो न भूमौ प्रविवेश, किन्तु बहिः पतितः, सर्वैर्लक्षितश्च । अत एव वास्तविकेऽपि प्रतापकृतविघाते प्रमाणाभावात्, अवास्तविके शक्तिकृतविघाते प्रमाणोपलब्धेः 'मया प्रतापेन अयं हतः, नात्र त्वदुक्तौ किमपि प्रमाणम्' 'मया शक्तिसिंहेन अयं हतः' एवं तयोः प्रतापशक्तिसिंहयोर्विवादः—कलहः, अभवदेव । इति विरोधे बीजम् ।

तमस्तकर्णं तत्रस्थैः सर्वैरप्युच्यते ) वसुंधरे ! केयं ते दशा भाविनी ।

प्रतापः शक्तिरहितो न जेतुं प्रभविष्यति ।
वसुधे हा निगडिता नीचानां मा वशं गमः ॥२८॥

---

अथ विवादस्य भयंकरताबीजं दर्शयति—आवयोरिति । तव च मम चेति । 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' इत्येकवद्भावः । आवयोः खड्गः-खड्गपदं शस्त्रोपलक्षकम्, कुन्तो वा बाणो वा । स्वयमेव, निर्णयं-केन वराहो हत इति निश्चयम्-विधास्यति । अत्र निर्णये यस्य जयो भवेत्तेनैव किरिवराहो निहतः । यस्य जयो भविष्यति स एव शूर इति कृत्वा तत्कृतमेव वराहहननमिति स्वत एव निश्चयो भविष्यतीति तात्पर्यार्थः ॥२७॥

शक्तिसिंहोऽपीत्यादि सर्वं सुगमम् । युद्धादौ तयोः स्वरूपं प्रदर्शयति—

पराधीनताप्राप्तेस्तवेयं का दशा भाविनीत्याह—प्रताप इति । शक्तिरहितः—प्रतापस्य शौर्यशालितया शक्तिसिंहस्यैव नाशो भविष्यतीति शक्तिसिंहरहितः, अथवा—भ्रातुर्मारणेन प्रभावोत्साह-

रामगुरुः—( उभौ संबोध्य वदति ) भोः २ स्वस्वसंरम्भादुभौ विरमताम् ,जीवतोरुभयोर्देशः दास्यं नोपगच्छेत् अन्यथा युष्मदर्थं मया आत्मोत्सर्गः क्रियते ।

( इत्युक्त्वा अकालजलद इव निघुष्य उभावन्तरा समुपस्थितः । )

(यदा एवमपि प्रतापशक्ती स्वस्वसंरम्भान्न विरतौ, तदा पुरोहितो रामगुरुः पश्यतोर्द्वयोर्मध्ये उपेत्य स्वं हृदयं भित्त्वा छुरीेन न्यपतत् । )

( तदनन्तरं रक्ताप्लुतदेहं भूमौ लुठन्तं तयो रक्षकं देशस्योपकृतौ मुमूर्षुं किमपि साहसं विदधतं तं रामगुरुं दृष्ट्वा भूरक्षणे प्रजासु अनिर्वचनीयं साहसमभूत् । अथ रामगुरुमवलोक्य तौ द्वावपि विरतौ । )

---

मन्त्रशक्तिरहितः प्रतापः जेतुं म्लेच्छाधिपतिमकबरं विजेतु न प्रभविष्यति—न समर्थो भविष्यति । हा इति शोके । हे वसुधे ! सर्वसमृद्धिसम्पूर्णे ! त्वं निगडिता—परायत्तत्वेन पदयोर्बद्धा सती, नीचानां यवनजातीयानां वशं, मा गमः—न प्राप्नुहि ॥ २८ ॥

अथ रामगुरुरात्मपातोद्देश्यं श्रावयति । युवयोर्जीवतोः, देशः-अस्माकं मातृभूमिर्मेवाडः, दास्यं दासता नैवोपगच्छेत् । देशस्वातन्त्र्य-रक्षार्थम् आत्मोत्सर्गः—आत्मघातः, मया विधीयते, यथा सहर्षं देश-रक्षार्थं मया प्राणत्यागः क्रियते तथैव युष्माभिरपि कर्तव्यम् । देश-स्वातन्त्र्यार्थं प्राणास्तृणवत् त्याज्या इति तदाशयः । अन्यत्सर्वं सुगमम्

अथ रामगुरोः कृत्यमाह—सः—रामगुरुः, पश्यतोर्द्वयोः मध्ये उपेत्य छुरीेन—चर्मास्त्रेण, स्वं—स्वकीयं हृदयं भित्त्वा विदार्य तयोः—पूर्वोक्तयो-र्भ्रात्रोः-प्रतापशक्तिसिंहयोः, रक्षकं, देशस्योपकृतौ—देशोपकारार्थं तदीय-त्यागं—देशस्वातन्त्र्यार्थं स्वकीयप्राणत्यागरूपं रामगुरोः कृत्यं दृष्ट्वा, प्रजासु-प्रजामध्ये,देशरक्षणे-मातृभूमिरक्षाया लोकातिशायित्वादनिर्वचनीयं

शक्तिः—(सगर्वं साभिमानं च) नहि २ मया हतोऽयम् ।

प्रतापः—आवयोर्निर्णयं खड्गः स्वयमेव विधास्यति ।
जयो यस्य भवेदत्र तेनैव निहतः किरिः ॥ २७ ॥

शक्तिः—आगच्छ ते गर्वं चूर्णयामि ।

पुरो०—'नैतद् युक्तम्, मैवं विदध्याः, भ्रात्रोः संग्रामो नैवोचितः', इति वदत्स्वेव पुरोहितादिषु द्वावपि प्रतापशक्तौ स्वस्वकुन्तौ समुत्थाप्य योद्धुं सन्नद्धौ ।

( ततः क्रोधास्फुरिताधरोष्ठौ आरक्तविशालविस्फारितनयनौ अकाण्डप्रलयकालसमुद्रसमभयंकरनिनादौ अन्योन्यमाक्रमितुं हन्तुं च प्रवृत्तौ । )

( ततस्तकर्णं तत्रस्थैः सर्वैरप्युच्यते ) वसुंधरे ! केयं ते दशा भाविनी ।

प्रतापः शक्तिरहितो न जेतुं प्रभविष्यति ।
वसुधे हा निगडिता नीचानां मा वशं गमः ॥२८॥

---

अथ विवादस्य भयंकरतावीजं दर्शयति—आवयोरिति । तव च मम चेति । 'त्यदादीना मिथः सहोक्तौ यत्परं तच्छिष्यते' इत्येकवद्भावः । आवयोः खड्गः-खड्गपदं शस्त्रोपलक्षकम्, कुन्तो वा बाणो वा । स्वयमेव, निर्णयं-केन वराहो हत इति निश्चयम्-विधास्यति । अत्र निर्णये यस्य जयो भवेत्तेनैव किरिर्वराहो निहतः । यस्य जयो भविष्यति स एव शूर इति कृत्वा तत्कृतमेव वराहहननमिति स्वत एव निश्चयो भविष्यतीति तात्पर्यार्थः ॥२७॥

शक्तिसिंहोऽपीत्यादि सर्वं सुगमम् । युद्धादौ तयोः स्वरूपं प्रदर्शयति—पराधीनताप्राप्तेस्तवेयं का दशा भाविनीत्याह—प्रताप इति । शक्तिरहितः-प्रतापस्य शौर्यशालितया शक्तिसिंहस्यैव नाशो भविष्यतीति शक्तिसिंहरहितः, अथवा-भ्रातृमारणेन गृहकलहतया प्रमायोत्साह-

रामगुरुः—( उभौ संबोध्य वदति ) भोः २ स्वस्वसंरम्भादुभौ विरमताम् ,जीवतोरुभयोर्देशः दास्यं नोपगच्छेत् अन्यथा युष्मदर्थं मया आत्मोत्सर्गः क्रियते ।

( इत्युक्त्वा अकालजलद इव निर्घुष्य उभावन्तरा समुपस्थितः । )

(यदा एवमपि प्रतापशक्तौ स्वस्वसंरम्भान्न विरतौ, तदा पुरोहितो रामगुरुः पश्यतोर्द्वयोर्मध्ये उपेत्य स्वं हृदयं भित्त्वा क्षणेन न्यपतत् । )

( तदनन्तरं रक्ताप्लुतदेहं भूमौ लुठन्तं तयो रक्षकं देशस्योपकृतौ मुमूर्षुं किमपि साहसं विदधतं तं रामगुरुं दृष्ट्वा भूरक्षणे प्रजासु अनिर्वचनीयं साहसमभूत् । अथ रामगुरुमवलोक्य तौ द्वावपि विरतौ । )

---

मन्त्रशक्तिरहितः प्रतापः जेतुं म्लेच्छाधिपतिमकबरं विजेतुं न प्रभविष्यति—न समर्थो भविष्यति । हा इति शोके । हे वसुधे ! सर्वसमृद्धिसम्पूर्णे ! त्वं निगडिता—परायत्तत्वेन पदयोर्बद्धा सती, नीचानां यवनजातीयानां वशं, मा गमः—न प्राप्नुहि ॥ २८ ॥

अथ रामगुरुरात्मघातोद्देश्यं श्रावयति । युवयोर्जीवतोः, देशः-अस्माकं मातृभूमिर्मेवाडः, दास्यं दासतां नैवोपगच्छेत् । देशस्वातन्त्र्य-रक्षार्थम् आत्मोत्सर्गः—आत्मघातः, मया विधीयते, यथा सदर्पं देश-रक्षार्थं मया प्राणत्यागः क्रियते तथैव युष्माभिरपि कर्तव्यम् । देश-स्वातन्त्र्यार्थं प्राणास्तृणवत् त्याज्या इति तदाशयः । अन्यत्सर्वं सुगमम्

अथ रामगुरोः कृत्यमाह—सः—रामगुरुः, पश्यतोर्द्वयोः मध्ये उपेत्य क्षणेन—चणमात्रेण, स्वं—स्वकीयं हृदयं भित्त्वा-विदीर्य तयोः—पूर्वोक्तयो-र्भ्रात्रोः प्रतापशक्तिसिंहयोः, रक्षकं, देशस्योपकृतौ—देशोपकारार्थे तदीय-त्यागं—देशस्वातन्त्र्यार्थं स्वकीयप्राणत्यागरूपं रामगुरोः कृत्यं दृष्ट्वा, प्रजासु प्रजामध्ये,देशरक्षणे-मातृभूमिरक्षायां लोकातिशायित्वादनिर्वचनीयं

प्रजा० आः—किमिदं जातम् । इति प्रतापे कथयत्येव रामगुरु-मुत्थाप्य कर्णारावतकृष्णौ क्वचिन्नीतवन्तौ । प्रतापः शक्तिसिंहं संबोध्य ब्रवीति । रे शक्ते! त्वत्कृत एव इदं जातं, तस्मात्त्वं मेवाडभूमेरपसर ।

शक्तिसिंहः—( निःश्वस्य साश्रुनयनः सर्वान्सालुम्बादीन्विलोक्य भूमिं प्रणम्य च । )

क्षमे ! क्षमस्वैतदवेहि सूनुः कुक्षौ न जातस्तव दुर्जनोऽयम् ।
मेवाडदेशं यदसौ श्मशानभूमिं विधायैव सुखं मिमीते ॥२६॥

---

साहसम् अभवत् । तथाभूतं तत्कृत्यमवलोक्य सर्वेऽपि तृणवत्प्राणान-मन्यन्तेत्यर्थः ॥

त्वत्कृते एवेति । अत्र त्वमेवापराधी । तव लघुत्वाद् गुरुकथ-नानन्तरमप्यविरामात्, ज्येष्ठस्य ममानादरकरणाच्चेदं जातम् । तस्मात्तथाभूतस्य पातकिनः पवित्रभूमेरपसरणमेव श्रेय इति तदादिशति—तस्मात्त्वमित्यादिना ।

अथ शक्तिसिंहोऽपि निःश्वस्येति स्वापराधाभावं मन्यमानोऽनुचित-दण्डावगतेः साश्रुनयनः इति सालुम्बादीनां वियोगात्, स्वकीयकर्तव्य-विरुद्धमेवाडध्वंसनिश्चयकरणाच्च ।

अथ शक्तिसिंहः निश्चयं प्रदर्शयति—क्षमे इति । क्षमे-क्षमास्वरूपे, परमसहनशीले, क्षमस्व-उचितकर्तव्यतापरित्यागेन ममापराधं क्षमस्व । अथवा, पक्षान्तरं दर्शयति-त्वमेतदवेहि-जानीहि । अयं-प्रत्यक्षतया विद्यमानः, दुर्जनः-खलः, सूनुः-दुष्टपुत्रः, तव कुक्षौ न जातः मातृभूमि-रक्षणवीरप्रसवायास्तव कुक्षेर्मादृशस्य देशद्रोहिणो दुष्टपुत्रस्य जन्म न संभवतीति त्वमेतदवगच्छ, नायं मेवाडभूमेर्जातः । तथावगमने कारण-माह । यद् यस्मात्कारणाद्, अयं मेवाडदेशं श्मशानतुल्यं विधायैव सुखं मिमीते । स्वकीयां मातृभूमिं श्मशानतुल्यां कृत्वा सुखमसौ मनुते इति नैतादृशस्य त्वत्तो जन्म संभवतीति नायं मेवाडभूमेरुत्पन्न इत्यर्थः ॥ २६ ॥

पटोन्नयनम्—अकबरः स्थितः

द्वार०—जेदुजेदु देओ। कोवि इंदजालिओ दुआरे ठिओ।
जयतु जयतु देवः। कोऽपि ऐन्द्रजालिकः द्वारे स्थितः।

अक०—(विचिन्त्य) ऐन्द्रजालिकवेषेण प्रेषितः मुहम्मदनामाचरः। (प्रकाशम्) प्रवेशय। (द्वारपालः तं प्रवेश्य निष्क्रान्तः।)

अक०—ऐन्द्रजालिक रामगुरोर्मरणे शक्तिसिंहनिष्काशनान्तरं कथय।

ऐन्द्र०—तदनन्तरं स मेवाडं श्मशानं विधास्ये इत्युक्त्वा परावृत्य सवेगं तत्स्थानात्प्रचलितः। सकरुणं विलपन्तं प्रतापमवलोक्य सर्वे तदुन्मुखा अभवन्, अहमपि तेषां चक्षूंषि प्रतार्य शक्तिसिंहमनुप्रचलितः।

अक०—ततस्ततः —

ऐन्द्र०—तदनन्तरमहं वर्त्मनि शक्तिसिंहं समुज्ज्वलयन् प्रोत्साहयंश्च इहानीतवान्। तं च युष्मदीयायतनशालायामुपवेश्य अहमिहायातः। मन्ये स स्वयमेव स्वल्पेनैव कालेन समुपस्थास्यते, अतः परं भवन्तः प्रमाणम्।

अक०—मुहम्मद! तवैतत्कार्येण अहमतिप्रसन्नोऽस्मि, अतस्त्वां सर्वगुप्तचराणामाधिपत्ये स्थापयामि।

ऐन्द्र०—अनुगृहीतोऽस्मि।

---

आयतनशालायामिति धर्मशालायाम्—यत्र पान्थास्तिष्ठन्ति। अन्यत्सुगमम्।

अथाकबरस्य चिन्तास्वरूपमाह—नाद्यापीति। सः–प्रसिद्धः, कण्टक इवारिः–शत्रुः, मेवाडपतिः–यवनानां मदपाटकत्वान्मदपाटकः, मदपाटक एव प्राकृते मेवाड इति सिद्ध्यति। सोऽयं लौकिकसंज्ञाबोधको मेवाड-स्तस्य पतिः, यवनमदपाटकदेशाधिपतिः प्रतापः, अद्यापि मन्निघ्नता–मद-धीनता, न याति न प्राप्नोति। यावत्सः स्वतन्त्रः सन् भूम्यां विचरेत्ता-

अक०—गच्छ, विश्राममाचर। अहमत्रैव स्थितः शक्तिसिंहं प्रतीक्षे।

( इति निष्क्रान्त ऐन्द्रजालिकवेषधारी मुहम्मदः। )

( अकबर एकाकी स्थितश्चिन्तयति। )

( मनसि )

अक०—नाद्यापि मेवाडपतिः प्रतापो
मन्निघ्नतां याति स कण्टकारिः।
यावत्स्वतन्त्रो विचरेत्स भूम्यां
तावत्कथं स्यान्मम सौख्यगन्धः॥ ३०॥

( विचार्य सहर्षमिव )

प्रतापः शक्तिनिर्मुक्तो जेतव्योऽल्पान्मयोद्यमात्।
मानसिंहो मम पदौ तं ध्रुवं पातयिष्यति॥ ३१॥

(पुनः किंचिद्विमृश्य) परं मानः क्षत्रियपक्षपाती विशेषतो मेवाडीयेषु बद्धादरः। तैः सह कथमसौ वैरायिष्यते। ( पुनर्विमृश्य ) संभावयामि दक्षिणदेशं विजित्य परावर्त्त-

---

यन्मम सौख्यगन्धः सौख्यसम्बन्धः, 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः' इति विश्वः, कुतः स्यात्। तत्स्वतन्त्रतायां मम सौख्यसम्बन्धस्य संभावनापि नास्तीत्यर्थः॥ ३०॥

कथमयं प्रतापो मदधीनतां प्राप्स्यतीति विचारयस्तदुपायोपगतेः सहर्षमिव कथयति—शक्तीति। मया शक्तिरहितः—परित्यक्तशक्तिसिंहः, प्रतापः, अल्पादुद्यमात्—स्वल्पादेवोद्योगाज्जेतव्यः। मानसिंहो मम पदौ तं प्रतापं, ध्रुवं—निश्चयेन पातयिष्यति। मानसिंहस्तं मदधीनतां प्रापयिष्यतीत्यर्थः॥ ३१॥

सेनापतिः संदिश्यतामिति। अत्रायं गूढाभिसन्धिः। कदाचिच्छक्तिसिंह एकाकिनं मामवलोक्य आक्रमेत्, तदाऽयं शूरः साहसिकश्च

मानो मानो मेवाडाधिपतेः प्रतापस्य सविधे तद्रहस्य-
परिज्ञानाय मया सह सम्बन्धयितुं चोन्मार्गेणापि उदय-
पुरं गमिष्यति। तत्र मत्पक्षपातिनं मानं प्रतापो न
संमानयिष्यति। मन्ये तेन मानस्तत्रासंतुष्टः स्यात्।

(पुनः सखेदम्) काश्मीराङ्गकलिङ्गवङ्गमरुभृत्सौराष्ट्रकर्णाटका
मत्स्यः केरलकेकयान्ध्रमगधाः पाञ्चालगान्धारकौ।
मद्रः कोशलकच्छगुर्जरभुजाः सौवीरसिन्धुव्रजाः
एते मे वशगाः परं लघुतमो नाद्यापि मेवाडकः॥ ३२॥

अस्तु—जितः कर्णाटको येन स मानः साभिमानिकः।
ध्रुवं संमानतः स्वल्पान्मेवाडं नाशयिष्यति॥ ३३॥

---

आगराख्यस्वराजधान्यां स्थितस्य अकबरस्य चिन्तां प्रदर्शयति—काश्मीरेति। काश्मीरः प्रसिद्धः, अङ्गः-विहारप्रदेशान्तर्गतः, कलिङ्गः-बङ्गालप्रान्तीयो देशः, वङ्गः-बङ्गालः, मरुभृत्—मरुधरः, सौराष्ट्रः-सोमनाथ-महादेवस्थितिप्रान्तीयो देशः, काठियावाडः। कर्णाटकः-प्रसिद्धः, मत्स्यः-धवलपुरप्रान्तीयो देशः, केरलः मलाबारः। केकयः-काश्मीर-चम्बामध्यवर्ती पर्वतप्रदेशस्थितो देशः। अत्रत्यैव कैकयीति वाल्मीकावस्ति। आन्ध्रः-स्वनामप्रसिद्धः, मगधः—भोजपुरप्रान्तीयः, पाञ्चालः कान्यकुब्जो देशः, गान्धारः—खान्धारेति नाम्ना प्रसिद्ध इत्येके, जम्बूप्रान्तीय इत्यन्ये। मद्रः-माँझा इत्येके, चम्बा इत्यपरे। कोशलः-अयोध्याप्रान्तस्थितः, कच्छगुर्जरभुजाः—स्वस्वनाम्ना प्रसिद्धाः, सौवीरः-मारवाडमेवाडयोर्मध्यस्थितो देशः। सिन्धुः-सिन्धुनाम्ना प्रसिद्धः व्रजाः-मथुराप्रान्तीयः एते मे वशगाः ममाज्ञानुगामिनः, परं लघुतमः स्वल्पः कुत्सितो मेवाडो मेवाडकः, 'कुत्सिते' इत्यनेन, 'संज्ञायां कन्' इत्यनेन वा कन्। अद्यापि न वशगः। विभक्तिविपरिणामेन योज्यम्। बृहत्तमानां देशानामात्मवशगामित्वेऽपि स्वल्पस्य मेवाडस्य स्ववन्नत्वाच्चिन्तातिशयो द्योत्यते॥ ३२॥

अथ पुनस्तदुपायलाभाच्चिन्तां निरास्यत्—जित इति। येन-

( पुनर्विचिन्त्य )

आः ! दुर्जयः प्रतापः । तदीयसैनिका अपि स्वस्वभुजदण्डखण्ड्यमानासंख्यतरक्षुभल्लूकपञ्चाननसूकराः परमसाहसशौर्यालवेदपेसंपन्नाः स्वभूमिरक्षणदृढव्रताः सन्ति । जीवत्सु तेषु कथमसौ जय्यः ।

( अत्रान्तरे प्रविशति दौवारिकः । )

दौवा०—जेदु जेदु महाराओ ।
जयतु जयतु महाराजः ।

अक०—किमस्ति ।

दौवा०—मेवाडओ आयाओ सत्तिसीहो छत्तिओ दुवारि चिट्ठइ ।
मेवाडत आयातः शक्तिसिंहनामा क्षत्रियो द्वारि तिष्ठति ।

अक०—दौवारिक !
संदिश्यताम् सेनापतिः "मन्नियोगाद् बहुमानपुरस्सरमेनं प्रवेशयतु ।"

दौवा०—जं देवो आणवेदि ।
यद् देव आज्ञापयति । ( इत्युक्त्वा सेनापतिं संदेष्टुं गच्छति । )

---

अस्मत्सेनापतिना, कर्णाटको देशो जितः सः, अभिमानेन सह चरतीति साभिमानिकः—अत्यधिकाभिमानयुक्तः । एतेन अस्मद्गुढाभिसन्धिवशात् कर्णाटकविजयानन्तरं मेवाडं गच्छन्मानोऽपमानितो भविष्यतीति साभिमानिकत्वेन स्वत एव वैरायिष्यत इति सूचितं भवति । मानः-मानसिंहः, ध्रुवं स्वल्पात्संमानतः मेवाडं-मेवाडदेशाधिपतिं, नाशयिष्यति । तन्नाशात्त्वाधिपत्यमस्माकं भविष्यतीति, भावः ॥ १३ ॥

दुर्जय इति । 'ईषद्दुःसुषु०' इति खल् । स्वस्वभुजदण्डेन खण्ड्यमानत्वात् परमसाहसिकत्वं सूच्यते । स्वभूमिरक्षणदृढव्रतत्वेन उपायान्तराभावः सूचितो भवति । जय्य इति । 'क्षय्यजय्यौ शक्यार्थे' इत्ययादेशः ।

( ततः प्रविशति सेनापतिसहितः शक्तिसिंहः। )

शक्ति०—

प्रोद्यद्दर्पान्धकाराधिकृतसदसदज्ञानमूढान्तरात्मा
मिथ्याहङ्कारफल्गूकृतनिखिलजगद्वीरशौर्यप्रपञ्चः।
नीचानामाश्रयाद् यो व्रजति गिरिमहीं भीतभीतः प्रताप-
स्तद्ध्वंसमिच्छन् वदति भगवतो वन्दकी शक्तिसिंहः॥३४॥

अक०—कस्मादयं प्रकोपः?

शक्ति०—( सक्रोधम् ) आः! मया निपातितो वराहस्तमात्म-कृतं मन्यमानः प्रतापो बहुभिर्बहुशो बोधितोऽपि नामन्यत, प्रत्युत मयैव सह योद्धुमारभत। परन्तु यदि रामगुरुरन्तरा स्वात्मत्यागेन नागमिष्यत्तदा स मृत एवाभविष्यत्, मन्ये तद्धवमेव एनमरक्षयत्।

---

अथ शक्तिसिंहः स्वाभिप्राय दर्शयन् यवनप्रथानुरूपां भगवती वन्दनामाह—प्रोद्यदिति। प्रोद्यदतिशयेन विवर्धमानो यो दर्पोऽभिमानः स एव अन्धकारस्तेन अधिकृतं स्वायत्तीकृत यत्सदसद्विषयकमज्ञानं तेन मूढः सर्वथा ज्ञानशून्योऽन्तरात्मा यस्य स तथा। मिथ्याहङ्कारेण-पुरुषार्थरहितवृथाभिमानेन, फल्गूकृतः-असारतया दर्शितो निखिलजगद्वीराणां-समस्तसांसारिकशूराणां, शौर्यप्रपञ्चः-पराक्रमविस्तारो येन सः। मिथ्याभिमानतया स्वसदृशं कमपि नायं मन्यत इति भावः। तथा यः प्रतापः नीचानां भिल्लमीणादीनामाश्रयात्-तेषां साहाय्यात्, भीतभीतः-अतिभीतः सन्, पर्वतमहीं-कन्दरामधित्यकां च व्रजति तदाश्रयतया तत्र तिष्ठतीत्यर्थः, तद्ध्वंसमिच्छन्-तस्य प्रतापस्य ध्वंसं नाशयितुमिच्छन्, शक्तिसिंहो भगवतो वन्दकी वदति। वन्दकीमिति 'संज्ञायाम्' इति ण्वुल्। यद्वा-'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' इत्यनेन ण्वुल्, गौरादेराकृतिगणत्वात् गौरादित्वात् ङीप्॥ ३४॥

कस्मादयमित्यादि सर्वं सुगमम्।

अकबरः किमयमस्य द्वेषो वास्तविकः किं वा कृत्रिम इति मनसि विचारयन्निभिनोनि-आरक्तेति। आ-समन्ताद्, रक्तं-रक्तवर्णं, नेत्रयुगलं-नेत्रयुग्मं,

अक०—एवमेवैतत् । अस्तु । अतः परं किमभीप्सितम् ।

शक्ति०—समूलं मेवाडदेशमुन्मूलयितुमिच्छामि । अत किञ्चित्सेनासाहाय्य प्रार्थये ।

अक०—( मनसि ) ।

आरक्तनेत्रयुगल स्फुरिताधरोष्ठो
रोषप्रकम्पिततनुर्ज्वलदुक्तियुक्तिः ।
जीर्णोऽपि तत्कथनतो नवभासमानो
द्वेषोऽस्य तन्निहनने परिशुद्ध एव ॥ ३५ ॥

( प्रकाशम् )

लंकामिवाहं मेवाडं जित्वा गर्वसमुद्धतम् ।
अभिषेक्ष्यामि तत्र त्वा यथा रामो विभीषणम् ॥ ३६ ॥

परतु यावन्मानसिहो दक्षिणदेशं विजित्यायाति तावत्प्रतीक्षस्व । तदागमनानन्तरमेव —

---

यस्मिन्स तथा । स्फुरित ईषत्स्पन्दितोऽधरोष्ठो यस्मिन्स , रोषेण प्रकम्पिता तनु शरीर यस्मिन्, ज्वलन्ती क्रोधावेशवशादुद्भटा, उक्तियुक्ति कथनपरिपाटी यस्मिन्स तथा, जीर्णोऽपि कालान्तरतया परिक्षीणोऽपि, द्वेषस्वभाव एवायम् यत्कालान्तरेण स्वत परिक्षीयते, तत्कथनतः तदित्यस्य कथनेन सह कर्मधारयः । तथाभूतकथनेन नवभासमानः नव इव प्रकाशमान ,क्रोध स्याधिक्यान्नाद्यापि जीर्ण इति भाव । षष्ठीतत्पुरुषे तु कृत्रिमता प्रतीयेत । तस्य प्रतापस्य, निहनने-मारणे, अस्य-शक्तिसिंहस्य, द्वेष परिशुद्ध एव । सर्वथा वास्तविक एव विद्वेषो नात्र कृत्रिमताया लेशोऽपीत्यर्थ ॥ ३५ ॥

अथ शक्तिसिंहमुद्दिश्य अकबर कथयति—लकामिति । स्वगर्वातिशय बोधयति । अहमकबरः गर्वसमुद्धतम्-अभिमानोद्धत्ययुक्त मेवाड लकामिव जित्वा जय एवात्र साधारणधर्मा लकामेवाडयो , ततो गर्वसमुद्धतमिति लंकाया न विशेषणम् । तत्र मेवाडे त्वामभिषेक्ष्यामि, यथा रामो विभीषणमभ्यषिञ्चदित्यर्थ । एतेन विभीषण इव त्वमपि मम साहाय्य तद्भेदस्फोटनं च कुर्विति तत्तात्पर्यार्थं ॥ ३६ ॥

अस्मद्दन्तावलघनघटाऽऽच्छाद्यमानप्रतापः
स्फारस्फूर्जन्सघनविचरत्सैन्यगर्जत्रिनादः।
विभ्राजिष्णुप्रचुरविलसद्बाणवृष्टिप्रसारो
मेवाडे मे भवतु जलदः संगरः सैनिकानाम् ॥ ३७ ॥

---

अथाकबरः शक्तिसिंहस्योत्साहं वर्धयन्कथयति—अस्मदिति। अस्माकं ये दन्तावला हस्तिनस्ते घनघटा इव-मेघपटलतुल्याः, हस्तिनं बहुतरत्वेन श्यामताधिक्यात्, तैः आच्छाद्यमानः प्रतापः-प्रतापाधिको यत्र, यद्वा प्रतापः-प्रभावो यत्र 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः। यत्रास्मद्दन्तावलैः प्रतापप्रभाव आच्छादितो भविष्यतीत्यर्थः -: पक्षे-अस्मद्दन्तावला इव या घनघटाः मेघमालास्ताभिराच्छादितः प्रतापो सतापो यत्र सः। तथा-स्फारः-भूयिष्ठः 'पुरुहूः पुरु भूयिष्ठं स्फारं भूरि च' इत्यमरः। स्फूर्जन्-वज्रनिर्घोषतुल्यः सघनः सशब्दः, विचरत्सैन्यानां गर्जत्रिनादः दर्पेण शब्दो यत्र। पक्षे स्फारः-भूयिष्ठः, स्फूर्जन्-वज्रनिर्घोषरूपः, सघनो-मेघसहित विचरत्सैन्यानामिव गर्जत्रिनादो मेघध्वनिर्यत्र। गर्जश्चासौ निनादः, गर्जधातोः शब्दमात्रवाचकत्वेऽपि मेघशब्दे एव बाहुल्येनोपगमात्। पूर्वत्र शब्दमात्रपरत्वादवगन्तव्यम्। तथा-विभ्राजिष्णुः-शोभमानः प्रचुरविलसत्स्वर्ण-रजतादिपुङ्खतया देदीप्यमानः, बाणवृष्टिप्रसारः-बाणवर्षणविस्तारः यत्र। पक्षे-विभ्राजिष्णुः प्रचुर विलसन् बाणानामिव वृष्टेः प्रसारो यत्र। तथा जलदः-जलं द्यति खण्डयतीति जलदः-जलच्छेदकः, पञ्चमाङ्कगतकोमलमीरसर्वते जले विषप्रक्षेपेण करिष्यमाणं जलच्छेदनं पताकारूपेण सूच्यते। अथवा-डलयोः सावर्ण्यात् जडदः-जडदाता। समस्तवीराणां हननात् अवशिष्टानां युद्धादिकलाशून्यानां मूर्खाणां दाता पक्षे-जलदः-जलैर्भूमिप्लावकत्वान्मेघसदृशः मे-मम, सैनिकानां संगरः-संग्रामो मेवाडे भवतु। अत्र 'सैनिकानां जलदः' मरणानन्तरं दीयमानस्य जलस्य दातेति सर्वेषां सैनिकानां मरणाज्जलदः संगरो भवतु इत्यर्थान्वगतेर्भाविफलबोधकः प्रतापविजयः सूच्यते ॥ ३७ ॥

(सेनापतेरभिमुखम्) सेनापते! त्वमेनमार्यक्षत्रियाणां सैन्याधिपत्ये स्थापय। तावदयं सर्वान् तान् सज्जीकरोतु।

सेना०—यथाऽऽज्ञापयति भवान्। (इति गन्तुमिच्छति।)

अक०—तिष्ठ तावत्। शक्ते! तुभ्यं कान्धारप्रदेशः प्रदीयते। तस्मात्त्वयाऽस्मदीयसामन्तश्रेणिमधितिष्ठता यथारुचि मदीयगोष्ठ्यामागन्तव्यम्। किञ्च मानसिंहचालिता मदीया सर्वाऽपि आर्यक्षत्रियसेना त्वदायत्तैव।

शक्ति०—अनुगृहीतोऽस्मि।

(ततो निष्क्रान्ताः सर्वे।)

इति श्रीमहामहोपाध्यायमथुराप्रसादकृतौ वीरप्रतापनाटके द्वितीयोऽङ्कः।

---

शक्ते! तुभ्यमिति। तावत्त्वां कान्धारदेशाधिपतिं करोमि इति तद्देशाधिपत्याद् यथारुचि मदीयगोष्ठ्यामागन्तव्यमिति सामोक्तेश्च 'संग्रहः सामदानोक्तिः' इति लक्षणात्संग्रहाख्यसन्धिर्दर्शितो भवति।

इति श्रीमहामहोपाध्यायसर्वतन्त्रस्वतन्त्रविद्यावारिधि-पण्डितमथुराप्रसादकृतौ वीरप्रतापनाटके वैजयन्तीटीकायां बन्धुवैरनामको द्वितीयोऽङ्कः।

# तृतीयोऽङ्कः ।

## पटोन्नयनम्

( रामगुरुवियोगादत्यन्तदुःखोद्विग्नः पुष्पवाटिकायां मन्त्रिसहितः स्थितः प्रतापश्चिन्तयति )

प्रतापः—मन्त्रिन् ! रामगुरुरत्यन्तमस्माकं शुभचिन्तक आसीत् ।

नये कविर्बुद्धिवरेषु वाक्पति-
विपत्प्रतीकारविधौ सदाशिवः ।
तपःसु नारायणतुल्यतामितः
क्व मे स रामः स्थितिपालनक्षमः ॥ १ ॥

( ततस्तत्रैव प्रविशन्ति सालुम्बरावतकृष्णादयः । 'जय एकलिङ्गेश्वरस्य' इत्युक्त्वा सर्वे भूमौ एव उपविशन्ति । )

---

अथ रामगुरोर्मरणानन्तरं तद्वियोगादत्यन्तदुःखेनोद्विग्नः प्रतापः पुष्पवाटिकायामुपवने यत्र दुःखदशायां मनः प्रसादार्थं गच्छति तत्र मन्त्रिसहितः, प्रधानमन्त्रिसमन्वितः स्थितः सन् चिन्तयति । गुरुरेव राज्यप्रदाता, अयं देशोपकारार्थं मृत इति किमस्यापकृतये कर्तव्यमिति विचारयति ।

अथ तद्गुणस्मरणद्वारा तमनुचिन्तयति—नये इति । नये–नीतिविषये, कविः–शुक्राचार्यः, शुक्राचार्यस्य नीतिविषये प्रसिद्धिः, बुद्धिवरेषु मध्ये वाक्पतिः, साक्षाद् बृहस्पतिरेवेत्यर्थः, तथा विपदामापत्तीनां प्रतीकारविधौ—तन्निवृत्तितत्परतायां, सदाशिवः–साक्षान्महादेव एव । तपःसु–तपश्चर्यासु नारायणतुल्यतामितः, बदरिकाश्रमे नारायणरूपेण विष्णुना तपोऽकारीति प्रसिद्धम् । पूर्वत्राभेदेन प्रतिपादनम्, इह तु सादृश्येनेति । तत इदं बोध्यते, न तथा तपसि नारायणसदृशो गुरुरस्ति यथाऽन्यकार्येषु । सः स्थितिपालनक्षमः-मर्यादापालनसमर्थः, मे-मम, रामः-रामाख्यो गुरुः क्व । तस्येदानीं नाशान्न जाने स कुत्रास्तीति तत्स्थितेरप्यज्ञानात्तत्प्राप्तेस्सर्वथाऽसंभव एव । तेन निर्वेदातिशयो व्यज्यते ॥ १ ॥

प्रता०—मन्त्रिन् ! गुरोः शुभाध्यवसायकृते इह स्मारकं चत्वरमार-
चय, तत्पुत्रश्च तत्स्थाने विधीयताम् ।

मन्त्री—यथाऽऽज्ञापयति देवः । ( इति दौवारिकेण गुरु-
पुत्रमाह्वयति । )

( ततः प्रविशति दौवारिकेण सह गुरुपुत्रः । )

( सर्वे प्रणमन्ति । )

गुरुपुत्रः—विजयन्तां भवन्तः ।
मन्त्री—प्रतापो भवन्त गुरुपदे स्थापयति ।
प्रता०—भो गुरुपुत्र ! राजाज्ञया अद्य प्रभृति गुरोः स्थाने क्रियते ।
गुरुपुत्रः—संपत्तिसंप्राप्तिविधौ सुसाधू
राजत्कलानाथरुचौ रणेषु ।

---

जय इति । एकलिङ्गेश्वरस्य शिवस्योपासकत्वात्तस्यैव जयं कथयन्ति-
जयः सर्वोत्कृष्टतया स्थितिरस्तु । दुःखातिशयाद् भूमौ एव । चत्वर-
मारचय । एतेन प्रतापस्य कृतज्ञता व्यज्यते ।

रामगुरोः कार्यस्य प्रत्युपकारं तत्पुत्रे दर्शयति—तत्पुत्रश्चेति । तस्य
रामगुरोः पुत्रः सकलकर्मकाण्डादिप्रक्रियाया तस्यैव स्थाने विधीयताम्,
तत्स्थानापन्नतया अयमुपवेश्यताम् । अयं सर्वकार्येषु च आचार्यः स्यात् ।
अयमेव पूजनादिसर्वकार्याणामधिष्ठाता भवतु । तथा देशोन्नत्यै धर्म-
कार्याणि-अनुष्ठानदेवार्चनादीनि, विदध्यात् ।

अथ मन्त्री प्रतापाज्ञां श्रावयितुं गुरुपुत्रमाह्वयति । अन्यत्सुगमम् ।

संपत्तीति क्रियामेकवचनेन, पुंसि एकवचनद्विवचनाभ्यां शब्द-
चित्रतां दर्शयन्नाह—संपत्तीति । संपत्तेः संप्राप्तिविधौ सुसाधुः, राज-
दित्यस्योत्तरत्वात् 'रोरि' इति लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे
सिद्ध्यति । द्विवचने पदोर्विशेषणे सुसाधू इति । तथा रणेषु—संग्रामेषु,
राजन्ती-देदीप्यमाना कान्तियुक्तत्वात् कलानाथस्य रुचिरिव रुचिर्यस्याः,
यस्य, ययोर्वा हरेर्मूर्तिः शरीरं, वाग्निचयः-वाचां समूहः, शब्दतोऽर्थतश्च

मूर्तिर्हरेर्वाग्निचय पदौ च
प्रताप ! सौख्यं भवतो विधत्ताम् ॥ २ ॥

( इत्याशिष पुष्पाणि ददाति । )

सालुम्यः—महाराज ! गुरुपुत्रः पण्डितप्रवर. कविवरश्च ।

प्रता०—अत एव गुरुपदे स्थाप्यते ।

( ततः प्रविशति मानवृत्तपरिज्ञानाय प्रेषितः प्रतापानुचर. । )

( दूरतः प्रताप विलोक्य । )

अनुचरः-सिन्दूरारुणनेत्रकान्तिरुचिर प्राभातिकेन्दुद्युति—
देहे किंचिदसौ दधत् शिथिलतां भूमावुपेक्षास्थितः ।
मन्दं मन्दमिव ब्रवीति किमपि प्रम्लानचेतोऽन्तर-
खिन्नः किन्तु निशाप्रजागरवशात्किंवा शुचा सद्गुरो ॥३॥

---

कलानाथकान्तिसादृश्यमत्रावगन्तव्यम्, पदौ च चरणौ च, हे प्रताप भवत सौख्य—सुखपरंपरा, विधत्ताम् । मूर्तिर्वाग्निचय इत्यनयोराकाङ्क्षायामात्मनेपदे एकवचने विधत्ताम् परस्मैपदे द्विवचने च । अत्र शब्दचित्रत्वेऽपि व्यङ्ग्यत्वमभ्याहृतमिति नावरकाव्यत्वम्, तथा मूर्तिचरणवाचेनिष्वपि समानतया सौख्यविधानसामर्थ्यवर्णनाद्भक्त्यतिशयो व्यज्यते अलङ्कारव्यञ्जयादिवर्णन विस्तारभिया न प्रदर्श्यते । द्वन्द्वसमासे चान्तत्वात् टच् ।

पण्डितप्रवर—पण्डितेषु प्रकृष्टो वर· प्रवरः विशिष्टोऽस्ति । अत एवेति । एतेन स्वस्याचितकारित्व द्योत्यते । मूर्तिचरणवाचे अत्र ।

चवर्गान्तत्वात् टच् समाहार एकवचन च ।

अनुचर खेदजागरणयोः साधारण्यमवलोक्य तर्कयति—सिन्दूरेति । सिन्दूर इव अरुणे—किञ्चिद्रक्ते, ये नेत्रे तयो कान्त्या—सौन्दर्येण रुचिर.—मनोहरः, प्राभातिक·—प्रभातकालिको य इन्दुश्चन्द्रस्तद्वद् द्युतिर्यस्य, किञ्चित् शुक्लता रात्रिजागरणे शोके च भवति, अथ च देहे·शरीरे, किञ्चित् शिथिलतां दधत्, भूमौ उपेक्षया—उपेक्षाबुद्धया,

( इति विचिन्तयन् प्रविशति प्रतापसमीपेऽनुचरः )

अनुचरः—जयतु जयतु महाराजः।

प्रता०—कथय क्वेदानीं मानः ?,

अनु०—दक्षिणदेशं विजित्य अभिमानसमुत्पूरितान्तःकरणो भवन्तं स्वविभवं दर्शयितुमुन्मार्गेणैव उदयपुराभिमुखं प्रचलितः।

प्रता०—सालुम्ब ! एवमागमने कोऽप्यत्र गूढाभिसन्धिः स्यात्।

सालु०—( किंचिद्विमृश्य ) मन्ये स्वविभवं भवन्तं दर्शयितुं समायाति। अथवा आत्मवद् भवन्तमपि यवनैः सार्द्धं सम्बन्धयितुमभिकाङ्क्षते।

प्रता०—( वीरासनस्थः सन् खड्गमाकर्षति। ) आः ! क एष मयि स्थिते यवनैः सार्द्धं मां सम्बन्धयितुं प्रभवति।

सालु०—एवमेवैतत्, परमयं तस्य गूढाभिसन्धिर्लक्ष्यते।

---

स्थितः। निशायां विचारपरम्परयाऽतिजागरणेन आलस्यात् शोकाच्चैव भवति। प्रम्लानं चेतोऽन्तरं यस्य सः असौ प्रतापः, मन्दं मन्दम्–अति मन्दं किमपि ब्रवीति इव, किमपि कथयतीव। न खलूपलभ्यते स्पष्टतया किंकथयति। किन्तु निशाप्रजागरवशात् शक्तिसिंहस्य तथाविधां प्रतिज्ञां विधाय गमनात्मनगरस्य अकरणपक्षपातितयाऽवस्थानाद्विचारपरम्परया रात्रावतिजागरणात् खिन्नः। किं वा मद्गुरोः–उचितकारितया निष्पक्षस्य राज्यदापयितुर्गुरोः, शुचा–शोकेन, खिन्नः–दुःखितः। अत्र वर्णितानां धर्माणामुभयसाधारण्येन ऊहापोहौ सन्धिस्त्यज्यते ॥३॥

उन्मार्गेणैवेति। आगमने गतप्रतस्तस्य गमनमार्गो नायं किन्तु स्वमार्गं परित्यज्य अनेन मार्गेणागच्छतीत्यर्थः। यद्वा–आर्यमर्यादां परित्यज्य त्वां यवनैः सम्बन्धयितुमित्यसदभिलाषयाऽऽगच्छतीति स्यात्। अन्यत्सुगमम्।

प्रतापः सालुम्बोक्तं परमार्थतो मन्यमानः खड्गमाकर्षति–आः क

प्रता०—सर्वथा असंग्राह्योऽयम्।
पितुः स्वसुर्दानवशेन लब्धां मानप्रतिष्ठां शतशो धिगस्तु।
म्लेच्छादिसंसर्गिविदुष्टपङ्क्तौ किमार्यजातो नृपतिश्च भुङ्क्ते ॥४॥
रावत० नहि नहि कदाचिदपि कोऽप्यार्यभवस्तत्पङ्क्तौ नैव भोक्ष्यते।
प्रता०—परं मन्ये तेनापमानेन मानो वैरायिष्यते।
सालु—वैरोत्पादने दोषः कस्येत्यपि विचारणीयम्। स्वयमेवासौ मानः कथं नैव विचारयति।
प्रता०—'न बुध्यते इत्यपि बुद्धिसाध्यम्'
यद्यपि मानस्यैव दोष इति सर्वथा युक्तं तथापि नासौ विचारयति।

---

एवं मयीत्यादि कथयति च। अथ सालुम्बः०'तस्य गूढाभिसन्धिरुच्यते न तु परमार्थत इदमुच्यते' इत्यभिप्रायेण प्रतापं सान्त्वयति।

अथ प्रतापो मानमपाङ्क्तेयं दर्शयति—पितुरिति। पितुः स्वसुर्भगवान्दासस्य भगिन्या दानवशेन लब्धां-प्राप्ता, मानस्य प्रतिष्ठा-मानमहत्त्वं शतशो धिगस्तु। म्लेच्छादीनां संसर्गोऽस्यास्तीति म्लेच्छादिसंसर्गी, तेन विदुष्टायां पङ्क्तौ—यवनसंबन्धिविदूषितपङ्क्तौ आर्यजातः—आर्योत्पन्नः नृपतिः किं भुङ्क्ते। नैवेत्यर्थः॥ ४॥

अथ सालुम्बः वैरोत्पादने मानस्यैव दोषं बोधयन् स्वयमेवेत्यादि कथयति।

अथ प्रतापः सालुम्बोक्तं समर्थयन् कथयति—न बुध्यते इति। "इदं मया न बुध्यते" इति विवेकोऽपि बुद्धिगम्य एव। स चैवंविधः प्रकारहितो यदात्मनः प्रत्यक्षतया स्फुटमपि दोषं न पश्यतीत्यर्थः॥

---

१ भगवान्दासस्य मानसिंहः कृत्रिमः पुत्रः। तद्भगिनी चकबराय दत्ता, मानसिंहभगिनी सेत्यत्र मतभेदः। वस्तुतस्तु दासीपुत्री सेत्यत्र न कस्यापि विप्रतिपत्तिः। एवं च मानसिंहपितुर्दासीपुत्री सा भगवान्दासस्य दासीपुत्री तद् भगिनी वेति काकदन्तपरीक्षावन्निःसारमेवैतदिति।

सालुम्बः—शौर्यमदोन्मत्तो भवन्तं भोजनादिसंबन्धेन संबन्धयितुमेव असौ आगच्छति।

प्रता०—युक्तं संभाव्यते, परंतु—

संबन्धने सकलशास्त्रविरोधचर्चा
त्यागे कृते तु समरः पतितो गले स्यात्।
(अस्तु) मानो विलोकयतु मे समरे कृपाणं
मानं विहाय यदि नैव पलायतेऽसौ॥ ६॥

(इति खड्गं स्पृशति)

सर्वे—वयं सर्वे सन्नद्धाः स्मः। यवनानां कृते आत्मजातिमास्कन्दत्यसौ, किमनेन शोभनं स्यात्, न खलु वयं समराद्बिभीमः।

---

प्रतापः कथयति युक्तमिति। यत्त्वया संभावितं 'भोजनादिसंबन्धेन सम्बन्धयितुम्-इति तद् युक्तमेव संभावितम्, अहमप्येवमेव संभावयामि। परमत्र किं करणीयं किं वा न करणीयमिति प्रदर्शयति-संबन्धने इति। तेन सह भोजनादिसंबन्धस्वीकारे सकलशास्त्राणां विरोधस्य, चर्चा-विचारणाऽस्ति। सकलशास्त्रेषु तथाभूतस्य भोजनादिसंबन्धे प्रतिषेधात्सकलशास्त्राणां विरोधः प्रसज्यते, स च दुष्परिहरः। अथ शास्त्रमर्यादानुकूल्येन त्यागे सहभोजनादिसंबन्धस्य त्यागे कृते तु, समरः-संग्रामः, गले पतितः स्यात्। अनभिमतोऽपि संग्रामो भविष्यतीति संभावयामि। एवं सति शास्त्रमर्यादात्यागमसहमानः संग्रामं स्वीकरोति-मानो मानसिंहो मे मम समरे कृपाणम् असिम् शूराः कथं युध्यन्ते इत्यादि विलोकयतु। यद्यसौ मानो मानं स्वाभिमानं विहाय नैव पलायते। स्वाभिमानं विहाय पलायने एव मानप्राणरक्षा भविष्यति, अन्यथा संग्रामे मानो मया हत एव भविष्यतीति भावः। एतेन भाविसंग्रामे मानस्य प्रतापसंमुखानागमनं सूचितं भवति।

अथ सर्वे स्वसिद्धान्तं कथयन्ति-'न खलु वयं समराद्बिभीमः' इति। ततोऽभये कारणं प्रदर्शयन्ति क्षत्रियाणामिति। यदि क्षत्रियाणां

क्षत्रियाणां कृते धर्म्यं यदि युद्धमुपागतम्।
अतः परमभीष्टं किं यत्स्यान्मोक्षपदास्पदम्॥ ६॥

मन्त्री—परमसौ अतिथिः, अतो लौकिकव्यवहारेण भोजनादिसत्कारः कर्तव्यः। तदीयगूढाभिसन्धिविज्ञानानन्तरं यद्भविष्यति तद् द्रक्ष्यामः। तदनुचरितं चरिष्यामश्च।

प्रता०—एवमेव भवतु का हानिः।

(ततः प्रविशति दौवारिकः।)

दौवा—जेदु जेदु महाराओ।
जयतु जयतु महाराजः।

प्रता०—किमस्ति वक्तव्यम्?

दौवा०—माणागमणवुत्तंतणिवेअओ एक्को भोदीओ सेणाअरो
मानागमनवृत्तान्तनिवेदक एको भवदीयः सेनाचरः
पुप्फवाडिआओ दुआरि चिट्ठइ।
पुष्पवाटिकाया द्वारि तिष्ठति।

---

कृते—क्षत्रियसुखप्राप्त्यर्थं धर्म्यं-धर्मादनपेतं धर्मानुगतं शास्त्रमर्यादारक्षणोद्देश्यकमित्यर्थः, युद्धमुपागतं-प्राप्तं, स्यात् अतः परमभीष्टं किमस्ति यन्मोक्षपदास्पदं मोक्षस्थान स्यात्। स्वर्गात्तु क्षीणे पुण्ये मर्त्यलोके विशन्तीति पुन.पुनर्दुःखानि भवन्ति। मोक्षे तु 'न स पुनरावर्तते न स पुनरावर्तते' इति श्रुतेः सर्वथा दुःखोच्छेदात्सुखमेव। समरे मृतस्य मोक्षो नियत एव। उक्तं हि "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राट् यागयुक्तश्च रणे चाभिमुखे हतः।" मोक्षस्थानं सूर्यमण्डलादुपर्यवेति॥ ६॥

परमसावित्यादि सर्वं सुगमम्।

कषायतिक्तभोजनानां नीरसत्वान्न तदुपादानं कृतम्। नानाविधैरनेकप्रकारैरुपस्करणैः साधनैः शर्करान्नघृतमरिचादिभिः ये संसाध्यमाना भक्ष्यादयः, तत्र भक्ष्यं घृतादिभ्रष्टं चणकादि'मुद्गद्विदलादि वा, मृदु शुष्कं

प्रता०—प्रवेशय ।

(ततो दौवारिकेण सह प्रविशति सेनाचरः ।)

सेनाचरः—जेदु जेदु महाराओ ।

जयतु जयतु महाराजः ।

प्रता०—कथय क्वेदानीं मान. ।

सेना०—इयाणिं माणसीहो सव्वं पि सेणासंरोहं उदेउरस्स
इदानीं मानसिंहः सर्वमपि सेनासंरोहमुदयपुरस्य
दक्खिणभाअम्मि सण्णिवेसिय कइवएहिं सेणासंभावि-
दक्षिणभागे संनिवेश्य कतिपयैः सेनासम्भावि-
अपुरिसेहिं सुईयपासअराणुअरेहिं चेव सह उदेउरं
तपुरुषैः स्वकीयपार्श्वचरानुचरैरेव सह उदयपुरं
पविसमाणो भोदीयणिवासगिहाहिमुहं आगच्छइ ।
प्रविशन् भवदीयनिवासगृहाभिमुखमागच्छति ।

प्रता०—मन्त्रिन्! त्वं कुमारं पुरस्सरीकृत्य बहुमानपुरस्सरं मानं प्रवेशय । स्नानभोजनादिप्रबन्धं च बहुमूल्यसुशोभनद्रव्यैर्मधुराम्ललवणकटुवादिरसास्वादितैर्नानाविधोपस्करणसंपाद्यमानभक्ष्यभोज्यलेह्यचोष्यचर्व्यादिविविधपदार्थजातैर्विधेहि । सह भोजनाय यथासंभावितं व्याजः प्रदर्शनीयः कुमारोऽपि सहभोजने नैव नियोक्तव्यः । सालुम्ब ! त्वमपि तदातिथ्यसत्कारेऽस्य साहाय्यं कुरु । अहमपि अन्तर्हितो भूत्वा सर्वं विलोकयिष्ये ।

---

भोजनादिमित्यर्थः । भोज्यं शष्कुल्यादिकम्, लेह्यं श्रीखण्डादिकम्, गुर्जरदेशे प्रसिद्धम् । चोष्यमाम्रादिकम् । चर्व्यं तिलपर्पटकम् । इत्यादिरूपैर्विविधपदार्थजातैः अनेकविधपदार्थभेदैर्भोजनप्रबन्धं विधेहि । यथासंभावितम्-संभावितमनतिक्रम्य । संभावितानुरूपमित्यर्थः ।

काचिद्योगिनीति । अनिर्दिष्टनामा योगिनी । यद्यपि इयं सैव वेश्या परं तु योगमार्गाश्रयणानन्तरमनिर्दिष्टनामत्वात्काचिदित्युक्तम् । अथ

मन्त्री—यथाऽऽज्ञापयति देवः। (इति मन्त्री कुमाराभ्याम् सह निष्क्रान्तः।)

पटोन्नयनम्

(ततः स्नानपूजनादिसकलकर्मनिवृत्तो भोजनाय आसने उपविष्टः मानः प्रतापागमनं प्रतीक्षते।)

(ततः किञ्चिद् दूरतः समुपतिष्ठते वीणां वादयन्ती सतालं गायन्ती लोकान्प्रबोधयन्ती काचिद् योगिनी।)

(तदनन्तरमेव प्रविशति नानाविधद्रव्योपेतं राजभोजनमादाय सूपकारः। सूपकारो मानस्य सम्मुखं भोजनपात्रं स्थापयति।)

(योगिनी गायति।)

त्यज रे मान कपटमदजालम्। (मानपदश्रवणान्मानः समवहितः शृणोति।)

भज शिवकरणमीशपदपङ्कजममरशिरोजयमालम्।
उदितप्रतापतुल्यशुभदर्शनमहिमगिमण्डलशालम्।
सुभसम्पदापरमपदप्रापकमखिललोकपरिपालम्॥

---

मानमिदं प्रतापपक्षानुगमनायोपदिशन्ती प्रतापस्य प्रभावातिशयं शिवपदसाम्येन व्यञ्जयन्ती गायति।

त्यज रे इति। रे जीव! मानस्य-अहंत्वाभिमानस्य, कपटस्य प्रपञ्चस्य, मदस्य-औद्धत्यस्य गर्वस्य वा, जालं, त्यज-मुञ्च। अथ च-मानेति संबोधनम्, हे मान! कपटमदयोर्जालं प्रपञ्चं त्यज। तत्त्यागानन्तरं कार्यमुपदिशति-शिवकरणं-कल्याणकारकम्, अमराणां-देवानां, शिरोजयमालम्-शिरसि जयमालरूपेण स्थितम्, अथवा-अमरस्य अमरसिंहस्य शिरोजयमालम्, शिरसि जयमालरूपेण स्थितम्। ईशपदपङ्कजं-शम्भुचरणकमलम्, अथवा-ईशस्य ऐश्वर्ययुक्तस्य प्रतापस्य चरणकमलं भज सेवस्वेत्यर्थः।

कथंभूतं चरणकमलमित्याह-उदितेति। उदितो यः प्रतापः सूर्यस्तेन तुल्यम्, ईश्वरतुल्यमित्यर्थः। तथा शुभं-कल्याणकरं दर्शनं यस्य तत्, पुनर्द्वयोः कर्मधारयः। अथवा-उदितो-वर्धमानो यः प्रतापः-प्रतापसिंहस्तेन तुल्यं शुभं दर्शनं यस्य। यथा प्रतापस्य दर्शनं शुभकरं तथैव तस्यापीत्यर्थः।

लसितसुरासुरयक्षनागनरकिन्नररक्षोभालम् ।
भवभयहरणमरुणसमशोभितमघचयतपनकरालम् ॥
प्रतिदिनमगपतितनयावन्दितमाशीविषवाचालम् ।
करुणावरुणालयमहिमण्डितमधरितसरसप्रवालम् ॥

---

अथवा-उदितं-भाषितं यद् प्रताप इति पदं तत्तुल्यतया शुभं-शुभकरं दर्शनं यस्य । यथा प्रतापनाम शुभकरं तथैव प्रतापदर्शनमपीत्यर्थः । तथा अहीनां सर्पाणां मणिमण्डलेन-मणिसमूहेन शालं शोभमानम् । प्रताप-पक्षे—अहिमणीनाम् उत्तमोत्तममणीनां मण्डलेन शालं शोभमानम् एतेन सर्पमणिसत्त्वात् लोकोत्तरसंपत्तिशालित्वं सूचितं भवति । अथवा अहीनां द्विजिह्वानां भवत्सदृशानामित्यर्थः मणिमण्डलो यत्र एवंभूतो यः अकबरस्तं शालयति पीडयति इति । श्लेषे नेयार्थो न दोषावहः । पुनर्द्वयोः कर्मधारयः । तथा सुखस्य सम्पदायाः, परमपदस्य-मोक्षस्य, प्रापकम् । अन्यत्र सुखसंप-द्योर्यत्परमपदमुत्कृष्टस्थानं तस्य प्रापकम् । तथा अखिललोकानां-समस्त-चराचरसंसाराणां, परिपालं-रक्षकम्, अन्यत्र समस्तजनानां रक्षकम् । तथा लसितं शोभितं, सुरासुरयक्षनागनरकिन्नररक्षसां भालं मस्तकं येन, सुरादीनां चरणेषु निपतनात्, अन्यत्र-लसितं देदीप्यमानम् तथा सुरासुरयक्षनाग-नरकिन्नररक्षःसु भाभिः अलं शोभमानम्, पुनर्द्वयोः कर्मधारयः । तथा भवभयहरणं-संसारभयमोचकम् । अन्यत्र भवाः-प्राणिनस्तेभ्यस्तेषां वा यद्भयं तस्य हरणं-हारकम् । 'चलनशब्दार्थादकर्मकाद् युच्' इति युच् । तथा अरुणसमशोभितम्—अरुणसदृशरक्तवर्णम् । उभयत्र समानमेतत् । तथा अघचयस्य-पापसमूहस्य, तपने-संतापने नाशकरणे इत्यर्थः, करालं-भयंकरम्, अन्यत्र-अघचयस्य दुष्टप्राणिसमूहस्य, तपने-संतापने, दुष्टानां निग्रहे इत्यर्थः, करालम् । तथा प्रतिदिनम्, अगपतितनयया-पार्वत्या, वन्दितम् । अन्यत्र-पर्वताधिपतेः । कस्यचिद्राज्ञः सुतया वन्दित, तत्पति-त्वात् । यद्वा अगपतेः तनयैः भिल्लपुत्रकैः आ समन्तात् वन्दितम् । तथा आशीविषैः-सर्पैः, वाचालं-कुत्सितशब्दयुक्तम् । अन्यत्र मा इति निषेधार्थे । मा आशीविषाः-द्विजिह्वाः, पिशुना इत्यर्थः, वाचालाः-कुत्सितभाषिणश्च यत्र तत् । पुनर्द्वयोः कर्मधारयः । करुणावरुणालयं-दयासमुद्रम्, उभयत्र

ब्रह्मादिकसनकादिसकलनृपसेवितमलिकुलकालम्।
परमसुकृतसमुपागतदर्शनममृतसरोवरनालम् ॥ ७ ॥

मानः—( मनसि ) किमियं मामधिक्षिपन्ती कथयति जीवं वा ?
( प्रकाशम् ) प्रतापमाह्वय। अपरं च भोजनपात्रं सज्जीकृत्यानय।

मन्त्री—( बद्धाञ्जलिः सन् ) महाराज ! प्रतापस्य शिरोवेदनाऽस्तीति अन्तःपुरे शेते।

मानः—कुमार ! त्वं गत्वा तं निवेदय। मानो भोजनासनोपविष्टस्त्वामाह्वयति, आगत्य यथारुचि किञ्चिदपि भुङ्क्ताम्।

कुमारः—महाराज ! भवान् भुङ्क्ताम् पूज्यचरणा इदानीं शेरते।

मानः—कुमार ! त्वं गत्वा तमुद्बोध्य समानय।

---

समानमिदम्। अहिमण्डितं-सर्पैः शोभमानम्, अन्यत्र अहिभिः सर्परूपैः भयंकरैः वीरैर्मण्डितम्। अधरितः-अत्यन्तारुण्येन न्यग्भूतः, सरसप्रवालः-आर्द्रविद्रुमो येन तत्, उभयत्र समानम्। तथा ब्रह्मादिभिः-सनकादिसकलनृपिभिश्च सेवितम्। अन्यत्र-ब्रह्मादिकसनकादिसकलनृपीणां या सेवा, सा संजाता अस्य। तारकादित्वात् इतच्। ब्रह्मादिसेवालग्नमित्यर्थः। ब्रह्मादिसनकादिसकलनृपीणां सेवाकारकम्। तथा अलिकुलेन-भ्रमरसमूहेन, कालं-श्यामवर्णम्। देवैरानीतानां पुष्पाणामतिसौरभेण समागतैरित्यर्थः। अन्यत्र-रलयोः साम्यात्, अरिकुलस्य-शत्रुकुलस्य, कालं-नाशकम्। परमसुकृतेन-अत्यन्तपुण्येन, समुपागतं दर्शनं यस्य तत्, उभयत्र समानम्। अमृतसरोवरस्य-मोक्षरूपसरोवरस्य, नालं-परमप्रवाहस्थानभूतम्। अन्यत्र अमृतम्-अयाचितं यद्वस्तु तस्य परःसरोवरं-निवासस्थानं तस्य नालम्, अयाचितस्यापि दातारम्। अमृतं तदेव सरोवरं तत्र नालमिव नालम्, अमृतं स्यादयाचितम्। अत्र शिवप्रतापयोः शिवचरणधर्माणां साधारण्येन उपमालंकारो व्यज्यते। तेन शिवरूपः प्रताप इति तदाराधनमवश्यं कर्तव्यमिति तस्या अभिप्रायः। अतः कपटं विहाय एतत्पदमाश्रयस्वेति तदुपदेशः ॥७॥

कुमारः—नाहमुद्बोधयितुं शक्नोमि ।

मानः—कुमार ! त्वं ममानुरोधाद् गत्वा तमुद्बोध्य कथय । नासौ मानस्त्वया विना मोक्ष्यते ।

कुमा०—यथाऽऽज्ञापयति भवांस्तथा करोमि, परं पूज्यचरणानां शिरोवेदनाऽस्तीति न ते आगमिष्यन्ति ।

मानः—त्वं गच्छ कथय मत्सन्देशम् । यथारुचि किञ्चिदपि भुङ्क्ताम् नाहमन्यथा भोक्ष्ये ।

कुमा०—यथा आज्ञापयति भवान् । ( इति निष्क्रान्तः )

मानः—( मनसि ) प्रतापस्य भवेदपि शिरोवेदना परं तु कर्णं-जगन्मल्लादिप्रभृतयो राजवंशीयाः केचिदपि नैव विलोक्यन्ते । किंच सत्यामपि शिरोवेदनायामागत्य सहोपविश्य किंचिद्भोजने का क्षतिः, नूनमयं मां तिरस्कुरुते । ( प्रकाशम् । )

मन्त्रिन् ! कर्णप्रभृतयोऽपि नैव विलोक्यन्ते ।

मन्त्री—महाराज ! ते सर्वेऽप्यद्य आखेटार्थं गताः ।

मानः—किं मदागमनकारणादेव सर्वेऽपि आखेटार्थं गताः, किं वा व्याजोऽयम् । ( अत्रान्तरे मानसिंहपार्श्वचरः कश्चिद्गुप्तः मानस्य कर्णे एवमेवेति कथयति । )

सालुम्बः—( अन्यार्थमवलम्ब्य किंचित्क्रुद्धः सन् ) किं नाम एवमेव भवता मदेन आगमनं साधारणतया वेति भवन्त एव

---

मदागमनेनेति । मम आगमनं-मदागमनम् तस्य कारणादिति मानस्याभिप्रायः । मदेन-अभिमानेन, आगमनमित्याभित्य सालुम्बः कथयति । प्रतापादिरक्षातिरहित एकाकी मानो भोजने अनभिरुचिं प्रदर्शयन् कथयति-शीतमिति । शीतं-वा तद्दोषयुक्तम्, नीरसं-मधुरादिरसरहितम्, किं बहुना विरसमपि भवेत्. विरुद्धरसयुक्तमपि स्यात्, तथा सैकतं-सिकतामयम्, अत्यन्तवालुकोपेतम्, अथवा-अरुच्यम्-अरुचिकरं मनःप्रतिकूलम्, अक्तं-घृतादिरहितम्, अथवा-अदर्शकम् अपूर्णमन्नमित्यर्थः।

जानन्ताम्। वयं तु सौहार्देन भवतामागमनमित्येव जानीमहे ।

मन्त्री—( मानसिंहमुद्दिश्य ) महाराज ! भोजनं करोतु भवान्, शीतीभवत्येतत् ।

मानः—शीतं वा नीरसं वा विरसमपि भवेत्सैकतं वाऽप्यहृद्यं
रूक्षं वाप्यर्द्धपक्वं लवणविरहितं दुष्कषायप्रयुक्तम् ।
इष्टस्वज्ञातिमध्ये चणककृतमपि स्वाद्यमानं सगोत्रैः
सार्धं तद् भोज्यसौख्यं भवति तदपरं नीचवृत्त्याऽस्मपूर्तिः॥८॥

मन्त्रिन् ! कथं कुमारोऽपि नायातः ।

मन्त्री—महाराज ! भवान् भुङ्क्ताम् । स चाप्यागमिष्यति । कदाचित्पितुः परिचर्यावशाच्चिरयते ।

( एकाकी भोक्तुमनिच्छन्स्वापमानं मन्यमानो मनसि मानश्चिन्तयति । )

मानः—शाकं नापि बुभुक्षतेऽत्र कुलजश्चैकोऽपि साकं मया,
धिग्मे जीवनमेवमप्यभिमतं संबन्धसत्त्वं च धिक् ।

---

लवणविरहितम् । तथा दुष्कषायप्रयुक्त-दुष्कषायरसोपेतं चणककृतमपि तद् भोजनम्, इष्टा अभिमता या स्वज्ञातिस्तस्या मध्ये सगोत्रैः—स्वबान्धवादिभिः सार्धं स्वाद्यमानं, शीतादिदुष्टरसयुक्तत्वेऽपि मध्ये २ रहास्यादिना किंचित्किञ्चिद् भुज्यमानं भोज्यसौख्यं भवति, तदपरं बान्धवादितिरस्कृतेनैकाकिना भुज्यमानं नीचवृत्त्याऽऽत्मपूर्तिः, नीचप्रकारेण जीवनोपायः । एतेन न मे अन्नेन विना इदानीं प्राणान्तकष्टम् । अत इदं भोजनमहं भवतामनागमने सति त्यक्ष्यामीति सूच्यते ॥८॥

'किं चिन्तयतीति प्रदर्शयति—शाकमिति । अत्र एकोऽपि, कुलजः-कुलीनः, मया साकं शाकमपि न बुभुक्षते-शाकमपि भोक्तुं नेच्छति, अन्नभोजनादेर्वार्ता तु दूरे एव । एवमपमाने सति मे जीवनं धिक्, किमनेन जीवनेन । अभिमतमपि सम्बन्धसत्त्वं च धिक् । शिशोदियावंशीया मे बान्धवाः सम्बन्धिनो वा इति धिक्, न मे बान्धवा नापि संबन्धिन इत्यर्थः। अहं तु, अहंमान एव जीवातुर्जीवितकालो यस्य स तथा । 'आयुर्जीवि-

मानोऽहं त्वपमानभाजनमितोऽहंमानजीवातुकः,
स्वल्पैरेव दिनैः फलं फलयिता तापं प्रतापे स्वयम् ॥९॥

( ततः प्रविशति कुमारः )

कुमारः—महाराज ! तातस्तीव्रशिरोवेदनया नैवागन्तुं शक्नोति । भवान् भुङ्क्ताम् ।

(मानो भोजनपात्रात्पञ्चपौदनतण्डुलानादाय उत्तरीये बध्वा चोत्थितः । )

मानः—प्रकाशम् । साटोपं च ।

जानाम्यस्य शिरोगदं कपटिनो मद्दण्डसंघुट्टना-
त्सोऽस्मद्वीरगणप्रभूतविशिखैर्द्वित्रैर्दिनैः सेत्स्यति ।
तीक्ष्णोदग्रकृपाणकृत्तपृतनास्तीर्णक्ष्मादारुणं
दृष्ट्वा स्वं विपयं स्वयं प्रशमितः शीघ्र्यो गदो मूलतः ॥१०॥

---

तकालो ना जीवातुर्जीवनौषधम्' इत्यमरः । मानः—माननामा, एतेन स्वस्य गर्वातिशयो बोध्यते । यद्वा-मानोऽभिमानस्तत्स्वरूपः अपमानभाजनम्—अपगतं यद् मानं मानेति पदं तस्य भाजनम्, इतः-प्राप्तः । एतेन मानस्य नाशान्मम नामोच्छेद एव जातः । अथ वा मानः अहमपमानं प्राप्तस्तेन स्वल्पैः-कतिपयैरेव दिनैः, स्वयमहं प्रतापे तापम् अस्य कर्मणः पश्चात्तापरूपं संतापं फलं, फलयिता-फलयिष्यामि । अस्य कर्मणः फलमहं नेष्यामीत्यर्थः ॥ ९ ॥

पञ्चपौदनतण्डुलानिति । भोजनस्यानादरो मा भूदिति गृह्णाति । अथवा एतत्कृते एवाहमपमानित इति प्रतापपराजयानन्तरं ॥ वर्शयितुमुत्तरीये बध्नाति ।

स्वापमानमवगच्छन् कथयति—जानामीति । कपटिनः-भोजनकरणे कैतवं प्रदर्शयतः, अस्य-प्रतापस्य, शिरोऽगदं-शिरसोऽगदम्-औषधं, जानामि-अवगच्छामि । सः-अगदः, मम दण्डो-मद्दण्डः, तस्य तेन वा, यत्संघुट्टनं तस्मात्, अस्मद्वीरगणस्य प्रभूतैः-बहुतरैः, विशिखैः—बाणैः, द्वित्रैः दिनैः, सेत्स्यति-निष्पन्नो भविष्यति । अथ तीक्ष्णो-निशातः उदग्रः —उद्धतः यः कृपाणस्तेन कृत्ता-छिन्ना या पृतना-सेना, तया आस्तीर्णा-

( पुनः रुष्टः सन् )

सिंहः केसरलुञ्चनेन शयितः संबोध्य दुष्कोधितो
हस्तैः फुंकृतिघोरविस्तृतफणः कृष्णाहिरुद्बोधितः ।
प्रोद्यत्कीलकदम्बभीषणवपुर्वह्निः समालिङ्गितो
यन्मेऽकार्ष्ट तिरस्क्रियामसिपतेर्भूपालचूडामणेः ॥११॥

( पुनः सरोषं सालुम्बादिसमक्षं प्रतापादीन् लघीकृत्य प्रतिजानीते । )

तिष्ठेन्मिथ्या शिरोऽर्तिर्व्रजति वसुमतीस्वामिसंस्तूयमानो
मानो मानप्रदाता प्रधनरिपुगणस्तूयमानासिधारः ।

---

आच्छादिता, या क्षमा-पृथिवी, तया, दारुण-भयंकरं, स्वं विषयं-स्वकीयं देशं दृष्ट्वा स्वयं शीर्ष्णो गदः मूलतः प्रशमिता । मूलतः शीर्ष्णो गदस्योच्छेदान्न पुनस्तथाभूतो गदो भविष्यतीत्यर्थः ॥ १० ॥ -

रुष्टः सन् पुनः कथयति—सिंह इति । शयितः-सुप्तः, सिंहः, संबोध्य केसरलुञ्चनेन-सटाकर्षणेन, दुष्कोधितः, एव फुंकृत्या-फुंकारेण, घोरा-भयंकरी, विस्तृता फणा यस्य सः, एवंविधः कृष्णाहिः कृष्णसर्पः, हस्तैः उद्बोधितः, तथा प्रोद्यन्नूर्ध्वं गच्छन् यः कीलकदम्बो-ज्वालसमूहः, 'वह्नेर्द्वयोर्ज्वालकीलौ अर्चिः' इत्यमरः । तेन भीषणा वपुः स्वरूपं यस्य सः तथाभूतो वह्निः समालिङ्गितः । इदं तत्कृतम् । यद् भूपालाना-राज्ञा चूडामणेः-शिरोरत्नभूतस्य, राज्ञा मध्ये सर्वश्रेष्ठस्य, असिपतेः-कृपाणस्वामिनः, मत्समक्षं न कोऽपि कृपाणं धर्तुं प्रभवति । एवंविधस्य मे-मम, यूयं तिरस्क्रियां तिरस्कारमकार्ष्ट । एतेन सिंहादीनामिव अहमपि शीघ्रमेव युष्माकं हननं करिष्यामीति व्यज्यते ॥ ११ ॥

अथ प्रतापादीन् लघीकृत्य प्रतिजानीते । तिष्ठेदिति । मिथ्या-कृत्रिमा, शिरोऽर्तिः-शिरोवेदना, तिष्ठेत्-आस्ताम् । वसुमतीस्वामिभिः-भूपतिभिः, संस्तूयमानः, मानप्रदाता-शत्रूणां मानमर्दकः । दो अवखण्डने पदात् दाने मित्राणां मानवर्धकः, प्रधने-संग्रामे, रिपुगणैः स्तूयमाना असिधारा यस्य सः । यस्य खड्गधारां शत्रवोऽपि स्तुवन्ति, स मानो मानसिंहो व्रजति । इदमनर्थंकरं कार्यं संपद्यते । अथ चञ्चद्दोर्दण्डेन-चपलभुजदण्डेन, चन्द्री-

चञ्चद्दोर्दण्डबन्दीकृतनिखिलजगद्भूमिपालासिहारी
मेवाडं ध्वंसयित्वा सकलमपि कुलं यावनं वो विधास्ये ॥१२॥

सालुम्बः—(सरोषम्) सन्निपातरोगिणः किं किं न जल्पन्ति । याहि याहि यत्ते शक्यं तदाचर । स्वसामर्थ्यं नावलोपयेः ।

भर्तारमादाय पितृष्वसुस्त्वं संग्रामभूमिं समुपाश्रयेथाः ।
तन्नाशतो वैरविधिः समाप्तो भवेत्सुखी स्यात्सकलोऽपि लोकः ॥१३॥

(मानः अश्वपृष्ठमिव स्वाशिबिरं निर्गतः । मन्त्री तत्रैवास्थात् ।)

प्रतापः—रावतकृष्ण ! ज्ञायते मानोऽपमानं मन्यमानोऽभुक्त एव निर्गतः ।

रावतः—अहमप्येवमेव संभावयामि ।

प्रता०—पश्य, कुमारसहितः सालुम्ब इत एवाभिगच्छति । ततः सर्वमवगतं भविष्यति ।

---

कृता ये निखिला जगद्भूमिपालास्तेषाम् असिहारी—तान्विजित्य तेषाम् सिहर्ता, अहं मेवाडं ध्वंसयित्वा—नाशयित्वा, सकलमपि—समस्तमपि, वः—युष्माकं, कुलं यावनं—यवनस्येदं यावनं यवन-संबन्धि यवनमेवेत्यर्थः । विधास्ये—करिष्यामि । यत्तद्वर्गैर्वा यूयं मां तिरस्कुरुध्वे अहं युष्मान् तद्रूपमेव विधास्यामीति स्वशौर्यातिशयो व्यज्यते ॥ १२ ॥

सालुम्बः सक्रोधं तिरस्कुर्वन् कथयति—याहि याहीत्यादि । अथ यवनेन सार्धं पितृभगिन्याः सम्बन्धस्मारणेन अनादरातिशयं व्यञ्जयन् कथयति—भर्तारमिति । त्वं पितृष्वसुः—पितृभगिन्याः, भर्तारमकबरमादाय-अनुनयादिना आनीय, संग्रामभूमिं समुपाश्रयेथाः—आगच्छेः । तन्नाशतो वैरविधिः समाप्तो भवेत् । तदभावाद् युष्माभिः सहापि नास्माकं वैरं भविष्यति । एवं सति तन्नाशात्सकलोऽपि लोकः सुखी स्यात् । यवनराज्यस्याभावादनर्थोच्छेदेन सर्वोऽपि लोकः सुखी स्यात् । एतेन आर्यपतेः प्रतापस्य राज्यं सौख्यजनकमिति व्यज्यते ॥ १३ ॥

प्रतापो मानग्रहणाभिया पलाय्यमानं सैन्यं प्रदर्शयति—मान इति । मानः अभिमानं-गर्वं, हित्वा इहात्यन्तानादरेण गर्वनाशात् गर्वमिहैव मुक्त्वा सर्व-

(ततः प्रविशतः कुमारसालुम्बौ)

प्रता०—सालुम्ब! किमसौ मानोऽमुक्त्वैव गतः?,

सालु०—आम्।

प्रता०—किमसावब्रवीत्?,

सालु०—सन्निपातरोगिणः किं किं न जल्पन्ति।

प्रता०—तथापि किमसावब्रवीत्?,

सालु०—पञ्चपतत्कुलानुत्तरीये बध्वा "मेवाडं ध्वंसयित्वा सकलमपि कुलं यावनं वो विधास्ये' इत्युक्तवान्।

रावतः—(सक्रोधम्) मेवाडध्वंसकं मन्यमानः कथमसौ न गृहीतः।

सालु०—अतिथिरिति कृत्वा विमुक्तोऽसौ।

प्रता०—त्वया पुनः किमुक्तम्?,

सालु०—मया च "स्वकीयपितृष्वसुर्भर्तारमपि सार्धमानयेः" इत्युक्तम्।

रावतः—साधूक्तम्, साधु सालुम्ब! साधु। वीरोचितमेवोक्तम्।

प्रता०—पुनः पुनः।

सालु०—पुनरसौ त्वरितमेव स्वशिविरं निर्गतः।

प्रता०—पश्य, पश्य, एतत्सैन्यं द्रुततरं प्रयाति।

मानो हित्वाऽभिमानं व्रजति लघुतरं सर्वसैन्याग्रभागे
हस्त्यश्वं पत्तियुक्तं निखिलमपि बलं क्षोभमाशं प्रयाति।
मन्ये मानापमानात्कुपितमिव चलद् धूलिभिर्धूसराङ्गं
सीमानं लङ्घितुं द्राक् सलिलमिव महायत्नमेतद्विधत्ते॥१४॥

---

सैन्याग्रभागे लघुतरं पलायमानो व्रजति। हस्त्यश्वमिति। सेनाङ्गत्वात् 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकवद्भावः। पत्तियुक्तं हस्त्यश्वं निखिलमपि—समस्तमपि, बलं-सैन्यं, क्षोभमाशं-आशुयुक्तं सत्प्रयाति। अहमिदं मन्ये। धूलिभिः-रजोभिः, धूसराणि-ईषत्पाण्डूनि, अङ्गानि यस्य तथा मानापमानात्कुपितमिव चलत् एतत्सैन्यं सलिलमिव—जलप्रवाह इव द्राक्-शीघ्रं सीमानं लङ्घितुं महायत्नं विधत्ते। यथा जलप्रवाहः स्थानसंकीर्णतया

सालु०—मन्ये अपमानात्कुपितो मानो वैरायिष्यते ॥
प्रता०—अस्त्वेतत्, इदं तु पूर्वमेव निश्चितमासीत्, यन्मानोऽपमानं मन्यमानो रुष्टो भविष्यति। उदूखले शिरोदाने मुसलात्का भीतिः। युद्धं तु निश्चितमेव।

ताडिताशीविषसमो मानो वैरं चरिष्यति।
गत्वा सैन्यं दृढीकृत्य क्षिप्रमेवागमिष्यति ॥१५॥

परमिदानीं तज्जये प्रकारो विचारणीयः।
रावतः—इदानीमेव सैन्यं सज्जीकृत्य आक्रमितव्यम्।
प्रता०—स चेदानीमतिथिः, तावत्स्वसीम्नि च गमिष्यति। अथापि एतद्दिनेव द्रुततरं तत्सैन्यं प्रयाति, कथमसौ आक्रम्य ग्रहीतुं शक्यो भविष्यति। सर्वान्सामन्तानाहूय परिषदि परामर्शः कर्तव्यः। तावत् इदं भवेत्।

अस्यामुपत्यकायां तु न कश्चिच्चारयेत्पशून्।
न गच्छेदिति राजाज्ञा तद्विरोधे वधो भवेत् ॥१६॥

मन्त्रिन् इमां ममाज्ञामुद्घोषय। स बहिर्निर्गत्य डिण्डिमया तदाज्ञामुद्घोष्य पुनरागच्छति।

सालुम्ब! त्वमपि गच्छ, मन्त्रिन् सायं परिषदि सर्वानपि सामन्तानाह्वयतु।

---

इतस्ततोऽपि गच्छति एवमेव मानसैन्यमपयेनापि गच्छति। एतेन सैन्ये भयातिशयो चोत्यते ॥ १४ ॥

युद्धस्यावश्यंभावितां प्रदर्शयति-ताडितेति। ताडितो य आशीविषः-विषधरसर्पः, तेन समो मानो वैरं-विद्वेषं चरिष्यति। विषधरसर्पस्य स्वभाव एवायं यत्ताडितः सन् प्रत्यपकारमवश्यमेव करोति। सर्पसाम्येन अवश्यमेव युद्धं भविष्यतीति निश्चीयते। अथ मानस्योद्योगं दर्शयति। मानः गत्वा-इह स्थानात् गत्वा, सैन्यं दृढीकृत्य-सुसज्जितं विधाय, क्षिप्रमेव आगमिष्यति-आयास्यतीत्यर्थः ॥ १५ ॥

मन्त्री—यदाज्ञापयति भवान्। (ततो निष्क्रान्ताः सर्वे।)

इति श्री महामहोपाध्याय-मथुराप्रसाददीक्षितकृते वीर-प्रतापनाटके तृतीयोऽङ्कः।

पटोन्नयनम्

## शुद्धविष्कम्भः

(ततः प्रविशति एकतो जयार्थं शिवमाराद्धुं गच्छन् गुरु-पुत्रः, अपरतश्च इन्दौरनरेशः)

इन्दौ०—(दृष्ट्वा प्रणम्य च) गुरो! जयतु जयतु एकलिङ्गेश्वरः।

गुरुः—आः इन्दौरनरेशः। शुभं भवतु। कं जेतुं प्रचलितोऽसि

इन्दौ०—मानसिंहः अकबरात्सैन्यमादाय योद्धुं समेष्यतीति तज्ज-यार्थं परिषत् क्रियते तत्रैव गच्छामि।

गुरुः—मानसिंहो मूर्खो यदधेयवनः सन् आर्य्यान् कुलीनानपि तेन सह सम्बन्धयति।

इन्दौ०—अथ किम्। अत एव तत्परित्यागः कृत इत्यहं साधु मन्ये। परं स्वयं प्रतापेन उपत्यका कुतः शून्येव कारिता।

गुरुः—इदन्तु स्वल्पमेव दृश्यते, द्वित्रैरेव दिवसैर्वापीकूपतडागा-दिकं कन्दमूललतावृक्षसस्यादिकं च समूलमेव नाशि-तानि द्रक्ष्यसि।

इन्दौ०—कुत एवं विधीयते?

गुरुः—अस्त्यत्र गूढाभिसन्धिः। बुभुक्षापिपासाभ्यां तान् हतोत्सा-हान् विधायाक्रम्य विजेष्यामहे।

इन्दौ०—साधु साधु। अकबरः प्रतापाय अत्यधिकमीर्ष्यते।

गुरुः—(विहस्य) प्रतापदर्शकोऽपि प्रतापवशीभूत इव भवति।

इन्दौ०—अथ किम्। कुतश्चैतदुच्यते?

गुरुः—श्रूयते कश्चिद् भट्टः अकबरपरिषदि गत्वा तं तया तिर-स्कृतवान् येन स मृतप्राय एव संजातः।

इन्दौ०—कथम्?

गुरुः—कश्चिद् भट्टः अकबरपरिषदि उपेत्य स्वशिरसि स्थितं प्रतापदत्तम् उष्णीषमुत्तार्य आदावभ्यर्च्येत्यवदत्। तेन पृष्टः कथमिममुत्तार्य्य वन्दसे ? ततस्तेनोक्तम् । प्रतापस्यायमुष्णीषो मच्छिरसि। स अनार्यं न वन्दते इत्युक्त्वा प्रचलितः। ततः सर्वे जहसुः, इति भट्टतिरस्कृतो मृत इव अकबरः सञ्जातः।

इन्दौ०—( दीर्घं ह ह ह इति जहास ) आगतं परिषदः स्थानम् अहमेव गच्छामि।

[ इति विष्कम्भः ]

पटोन्नयनम्

( सर्षंउद्वितः प्रतापः परामृशति । )

प्रता०—कथमसावकबरो विजेतव्यः।

कर्णः—वयं सहस्रयोधिन आगतांस्तान् विजेष्यामहे।

चूडावत्—नहि सर्वे भवादृशाः, असंख्येयसैन्यश्च शत्रुः, तत्रापि सहस्रयोधिनो बहवो युद्धविशारदाश्च सन्ति।

रायतकृष्णः—तत्सैन्यागमने सति अस्माभिः पश्चादाक्रमो विधेयः।

सालुम्बः—नैतत्संभाव्यते, अविच्छिन्नपङ्क्तिकास्ते आक्रमिष्यन्ति

भिल्लाधिपतिः—रत्तिम्मि सुअप्पेहिं सेणिएहिं सिबिरम्मि अक्कमिय सव्वे णिहंतव्वा।

रात्रौ स्वल्पैः सैनिकैः शिबिरे आक्रम्य सर्वे निहन्तव्याः।

इन्दौरनरेशः—एवं सति नास्माकं शौर्यं देवा विलोकिष्यन्ते।

चूडा०—एकदा एवं भवेदपि,न पुनः २। सावधानास्ते भविष्यन्ति।

---

अथ प्रतापस्तत्प्रकारं प्रदर्शयति–वन्ध्या इति । वन्ध्याः—येषु कदाचिदपि फलानि न प्रादुर्भवन्ति, अवन्ध्याः–फलदातारः। कश्चिदपि फलिनः अस्मिन्समये फलयुक्ता अपि क्षुद्राः–लघुकायाः, दीर्घाः–महोन्नता विटपिगणाः–वृक्षसमूहाः.जायमाना भवेयुः, समस्तास्ते मूलतः शोधनीयाः नाशयन्तु। सस्यं गोधूमाद्यन्नं,मूलादि यस्य पत्रं मूलञ्चोभयमपि खाद्यते,

सालु०—एवं कृते शत्रोर्हानिरधिका भविष्यति। परमेवं विधाने अस्माकं जयो नैव भविष्यति। अनन्तरं ते आक्रम्य विजेष्यन्ते।

प्रता०—मम त्वेवं प्रतिभाति। शत्रुसैनिकानद्रिमध्यगान्विधाय आक्रमितव्यम्।

सर्वे युक्तम्! परं तु केन प्रकारेण?

प्रता०—सर्वाऽप्युपत्यका अन्नजलफलादिभिः शून्या विधीयतां विहिता च तथाविधा बहुतरा।

तत्प्रकारश्चायम्—

वन्ध्या वा सन्त्ववन्ध्याः क्वचिदपि फलिनो छायमानाः समस्ताः
क्षुद्रा दीर्घा भवेयुः खलु विटपिगणा मूलतः शोधनीयाः।
सस्यं मूलादिकन्दं मधुकमपि लता यत्र कुत्रापि वा स्यु-
स्तत्सर्वं नाशनीयं नहि भवतु यतो भक्ष्यलाभो रिपूणाम्॥ १॥

कूपा वाप्यः सरांसि स्वविषयचलिते सत्पथे वाऽपथे वा
यावन्त्येतानि सन्तु क्वचिदपि च भवेद् वारि वा पल्वलं वा।
तत्सर्वं नाशयित्वा मरुधरसदृशः सर्वतः स्वो विधेयो
देशोऽस्माभिर्महीधाद् रिपुहननगतिः पूर्णतश्चापि कार्या॥ २॥

---

कन्दं शूरणादिकम्, मधुकमपि लता वा यत्र कुत्रापि स्युः तत्सर्वमपि नाशनीयम्। समुदायविवक्षया चैकवचनम्। एवं कृते सति फलमाह-यतः रिपूणां भक्ष्यलाभो नहि भवतु। भक्ष्याप्राप्तौ स्वयमेव मृता भविष्यन्ति पलायिष्यन्ते वा॥१॥

एवं भक्ष्यालाभं प्रदर्श्य जलालाभप्रकारं दर्शयति-कूपा इति। स्वस्य विषयो-देशः, 'नीवृज्जनपदो देशविषयौ' इत्यमरः। तत्र चलिते सत्पथे 'स्वतिभ्यामेव' इति नियमात् 'न पूजनात्' इति समासान्तप्रत्ययस्य न निषेधः, अपथे-मार्गाद् बहिर्भूते स्थाने, कूपा वाप्यः सरांसि, यावन्ति-यावत्परिमाणानि, एतानि क्वचिद् सन्तु, वारि प्रसृतं जलं पल्वलम् अल्पजला-

अन्नपानाद्यसंप्राप्तेर्न मां ज्ञास्यन्ति दुर्जनाः ।
आक्रम्य युगपत्सर्वान् हनिष्यामोऽद्रिमध्यगान् ॥ ३ ॥

सर्वे—साधु साधु शोभनोऽयं प्रकारः ।

( उत्थाय सर्वे स्वस्थानं गच्छन्ति )

( अत्रान्तरे राजपुरुषौ हस्तैर्बध्वा द्वौ पुरुषौ नयतः । )

राजपु०—राअएणाओ पावइ अवहेलणफलं सुयं पुरिसो ।
राजाज्ञायाः प्राप्नोति अवहेलनफलं स्वयं पुरुषः ।
पाणदंडो ऽस्स विहिओ पसुचारणकए चेव ॥ ४ ॥
प्राणदण्डोऽस्य विहितः पशुचारणकृते एव ॥ ४ ॥

---

शयस्थानं वा क्वचिद् भवेत् । तत्सर्वं समुदायविवक्षया चैकवचनम्, नाशयित्वा, अस्माभिः-मया भवद्भिश्च । एतेन युष्माभिरपि स्वस्वस्थाने वृक्षजलादिकं नाशयितव्यमिति सूच्यते । स्वः-स्वकीयो देशः, सर्वतः-पूर्णप्रकारेण, मरुधरसदृशो विधेयः, इत्यनेनेदं सूच्यते, तत्र क्वचित्पीलवादिफलादिप्राप्तावपि अस्मद्देशे सर्वथा फलादेः प्राप्तिर्न भविष्यति । तदनन्तरं महीध्रात्–महीध्रे स्थित्वा पूर्णतश्च रिपुहननगतिरपि कार्या । एवं सति पूर्णतया शत्रुष्वाक्रमणमपि कर्तव्यमित्यर्थः ॥ २ ॥

अथ फलसिद्धिं प्रदर्शयति–अन्नेति । दुर्जना अकबरपक्षपातिनो मानप्रभृतयः अन्नपानादीनामसंप्राप्तेः, अन्नजलालाभात् मां न ज्ञास्यन्ति । कुत्र स्थितः प्रतापः, तत्सैनिका वा कुत्र सन्ति, तत्प्रजा वा कुत्रास्तीति तेषां ज्ञानमेव न भविष्यति । वयं युगपत् आक्रम्य अद्रिमध्यगान्–पर्वतमध्यायातान् । एतेन तेषां पलायने मार्गस्याभावो बोध्यते । सर्वान् हनिष्यामः–नाशयिष्यामः । तेषां नाशे सति अस्माकं जयो भविष्यतीत्यर्थः ॥३॥

अन्ये एवं मा कार्षुरिति राजाज्ञाया अवहेलनफलं श्रावयति–राजाज्ञेति । पुरुषः स्वयमेव अन्यैः सह वैराग्यभावेऽपि, राजाज्ञावहेलनफलं प्राप्नोति । तत्र राजाज्ञाया अवहेलने स्वल्पफलेऽपि प्राणदण्डो भवतीति दर्शयति । पशुचारणकृते एव-नैतावता राज्ञो हानिर्विहिता, किन्तु आज्ञाभङ्ग एवेति कृत्वा अस्य वृद्धस्य प्राणदण्डो विहितः । तस्मात् यूयं सर्वथा राजाज्ञां पालयतेति सूचितं भवति ॥ ४ ॥

भिल्लपुत्रः—आ ! दारुण से आणा, पिउणो सूलीदंडो
आः ! दारुणा तस्य आज्ञा । पितुः शूलीदण्डो
विहिओ। कल्ले भइणीभत्तुणो वि सूलीदंडो
विहितः । श्वो भगिनीभर्तुरपि शूलीदण्डो
हविस्सइ।
भविष्यति ।

(अन्तर्गृहादानीय धनुः शरांश्च सज्जीकृत्य प्रतापं हन्तुं प्रतिजानीते ।)

भि० पुत्रः—भइणीए वेहव्वाओ पुव्वं चेव पदावं हणिस्से।
भगिन्या वैधव्यात्पूर्वमेव प्रतापं हनिष्यामि।

भि० भगिनी—भाय ! अम्हाणं सवहो, मा पदावं
भ्रातः ! अस्माकं शपथः, मा प्रताप
हण। सो क्खु अम्हाणं अण्णदाअओ राआ।
जहि। स खलु अस्माकम् अन्नदायको राजा।
सो क्खु ईसरो।
स खलु ईश्वरः।

( इति ब्रुवती गृह्णाति )

भि० पुत्रः—मुंचउ अम्हे, पदावं हणिस्से।
मुञ्चतु अस्मान्, प्रतापं हनिष्यामि।

भि० भगिनी—कम्हा ?
कस्मात् ?

भि० पुत्रः—कहं खु तुए ण सुअं ?, पिया सूली कारिओ,
कथं खलु त्वया न श्रुतम् ? पिता शूली कारितः,
तक्कलेअरं पि ण दावेइ । कल्ले तुह भत्तुणो वि
तत्कलेवरमपि न दापयति। श्वस्तव भर्तुरपि
सूली हविस्सइ।
शूली भविष्यति ।

भि० भगिनी—कम्हा सूली कारिओ ?
कस्मात् शूली कारितः ?

मि० पुत्रः—मह पिया णिज्जणं उवच्चयामग्गं दट्ठूण अणा-
मम पिता निर्जनमुपत्यकामार्गं दृष्ट्वा अजा-
वोओ चारेउं गओ। रण्णो य आणाए अवहेलणकए
वीश्चारयितुं गतः। राज्ञश्च आज्ञाया अवहेलनकृते
पिउणो सूली दंडो कारिओ, कल्ले तुह भत्तुणो
पितुः शूली दण्डः कारितः, श्वस्तव भर्तुः
सूलो दंडो हविस्सइ।
शूलो दण्डो भविष्यति।

मि० भगिनी—एव्वं पि अपरिक्खओ पदावो चिट्ठउ।
एवमपि अपरिक्षतः प्रतापस्तिष्ठतु।

(इति पादयोः पतति स चापधूय निष्क्रान्तः।)

चारणः—न स्वर्णभूषणै राजा राजा भवति शक्तिमान्।
अन्यैरपरिभूताज्ञो राजा लोकैर्निगद्यते॥ ५॥

(इति गायन्निष्क्रान्तश्चारणः।)

(भिल्लभगिनी उत्थाय स्थिता सती चिन्तयति।)

मि० भगिनी—हा पदावो अपरिक्खयंगो होउ। हे अग्गिदेव!
हा प्रतापोऽपरिक्षताङ्गो भवतु। हे अग्निदेव!
पाणणाहाहिणायअ सअललोअसंथूयमाण-
प्राणनाथाधिनायक सकललोकसंस्तूयमान-

---

"राज्ञो हानिर्नैव जाता, इत्यपराधो नैवास्तीति वधदण्डोऽनुचित इति प्रजायां प्रवादो न प्रसरेदिति" चारणो गायन् राज्ञ औचित्यकारितां श्रावयति—न स्वर्णेति। शक्तिमान्—शक्तिसंपन्नो राजा, स्वर्णभूषणैः राजा न भवति-न खलु बहुतरस्वर्णादिभिः स राजा भवति किं तु अन्यैरपरिभूता सर्वथा स्वीकृता आज्ञा यस्य सः, एवंभूत एव पुरुषो लोकैः राजा निगद्यते। एवं च तदाज्ञाया अवहेलने तस्य राजत्वमेवोच्छिद्यत इति तदुच्छेदकस्य प्राणदण्ड उचित एव जातः॥ ५॥

कित्तिमंडलं सुजसत्थोमधवलियदिग्विभाग्गं
कीर्तिमण्डलं स्वयशःस्तोमधवलितदिग्विभागं
सव्वजणमणोरंजणकरणपक्खाअविहवं सूरिय-
सर्वजनमनोरञ्जनकरणप्रख्यातविभवं सूर्य-
पदावाओ वि अहियअरं सुसोहणं अम्हाणं
प्रतापादपि अधिकतरं सुशोभनम् अस्माकं
पदावं अपरिक्खयंगं करेउ। हा! भाया गओ
प्रतापम् अपरिक्षताङ्गं करोतु। हा! भ्राता गतः,
पदावं परिक्खयंगं करिस्सइ।
प्रतापं परिक्षताङ्गं करिष्यति।

(इति रुदती सती स्थिता सर्वतोऽवलोकते)

(लघुभ्राता विह्वला भगिनीं विलोकयति)

ल० भ्रा०—भइणि! कहं वीहला?
भगिनि! कथं विह्वला?

(भगिनी भ्रातुः स्वरसंयोगात्किञ्चिदुच्छ्वस्य)

भि० भगि०—हा कुलदेवआओ! पदावं अपरिक्खयंगं करेह।
हा कुलदेवताः! प्रतापमपरिक्षताङ्गं कुरुत।

ल० भ्रा०—भइणि! पदावो अपरिक्खयंगो चेव चिट्ठइ।
भगिनि! प्रतापः अपरिक्षताङ्ग एव तिष्ठति।

(भि० भगिनी पुनः प्रबुद्धा सती लघुभ्रातरं विलोकयति)

भि० भगिनी—भाय! अज्ज तुह भाया पदावं मारेउं पडिसुणिय
भ्रातः! अद्य तव भ्राता प्रतापं मारयितुं प्रतिश्रुत्य
रायट्ठाणं गओ। पदावं रक्खेह, सो क्खु ईसरो।
राजस्थानं गतः। प्रतापं रक्षयत, स खलु ईश्वरः।

---

भ्रात इति। 'अत्र अद्य तव भ्राता' इत्यारभ्य 'अपरिक्षताङ्गो भवतु' इति पर्यन्तेषु प्रत्येकपदेषु विशिष्टस्वारस्यमस्ति, विस्तरभिया न प्रदर्श्यते, विद्वद्भिः स्वयमूह्यम्।

वेइयमरिआदारक्खणपरो विविहवजणच्चाय-
वैदिकमर्यादारक्षणपरो विविधव्यसनत्याग-
गहिअमुणिव्वओ अप्पकुलपरंपरागयसउतसमा-
गृहीतमुनिव्रतः आत्मकुलपरंपरागतश्रौतस्मा-
त्तकम्मकरणनिउणो णिअपयापालणविमुत्त-
र्तकर्मकरणनिपुणो निजप्रजापालनविमुक्त-
सव्वसुहो अम्हाणं राया पदावो अपरिक्खयणो
सर्वसुखः, अस्माकं राजा प्रतापः अपरिक्षताङ्गो
होउ।
भवतु।

ल० भ्रा० भिल्लः—कम्हा तेण पडिण्णायं ?
कस्मात् तेन प्रतिज्ञातम् ?

भि० भगिनी—तुह पिउणो रएणा सूली दंडो विहिओ।
तव पितुः राज्ञा शूली दण्डो विहितः।

ल० भ्रा० भिल्लः—सुयं चेव। मह पिआ तुह भत्ता अ राआणं
श्रुतमेव। मम पिता तव भर्ता च राज्ञाम्
आणां ओहिलिय अयावीओ चारेउं गया।
आज्ञामवहेल्य अजावीश्चारयितुं गतौ।
तेण तेसिं पाणदण्डो विहिओ। णहि क्खु
तेन तयोः प्राणदण्डो विहितः। नहि खलु
रएणा अप्पणो कए दारुणा आणा किआ।
राज्ञा आत्मनः कृते दारुणा आज्ञा कृता।
किं तु पयाअणरक्खणट्ठं चेव। जओ
किन्तु प्रजाजनरक्षणार्थमेव। यतः
सुण्णट्ठाणदंसणेण रिऊणं ण्णाणं चेव ण
शून्यस्थानदर्शनेन रिपूणां ज्ञानमेव न
हविस्सइ। कुत्थ पदावो कुत्थ वा तस्स
भविष्यति। कुत्र प्रतापः कुत्र वा तस्य

पयाअणो, अओ अम्हे मुहम्मदधम्माओ
प्रजाजनः, अतोऽस्मान् मुहम्मदधर्माद्
रक्खिउं दारुणा आणा विहिआ।
रक्षितुं दारुणा आज्ञा विहिता।

भि० भगिनी—पदावं रक्ख।
प्रताप रक्ष।

ल० भ्रा० भिल्लः—केणोवाएण।
केनोपायेन।

भि० भगिनी—अम्हे गंतूण पदावस्स सविहे अहवा
वयं गत्वा प्रतापस्य सविधे अथवा
पदावदेवीए सविहे कहिस्सामो- पदावो
प्रतापदेव्याः सविधे कथयिष्यामः- प्रतापः
अज्ज आहेडत्थं ण गच्छउ त्ति अपरिक्खओ
अद्य आखेटार्थं न गच्छत्विति अपरिक्षितो
होहिस्सइ।
भविष्यति।

ल० भ्रा० भिल्लः—जुत्तम्।
युक्तम्।

( इति द्वावपि भ्राताभगिन्यौ गच्छतः )

## पटोन्नयनम्।

( अथ प्रभाते तत्रैव राजद्वारे तावुपस्थितौ। ज्वराक्रान्ता मूर्छितेव भिल्ली प्रलपति पदावं रक्खेह ईसरो सो।' प्रताप आगत्यावलोकयति।

प्रताप —केयं ? किमियं कथयति ?

भिल्लः—इमाए भाउणा तुम्हं मारेउं पडिण्णाअं ति णिवेदेउं
अस्या भ्रात्रा त्वां मारयितुं प्रतिज्ञातमिति निवेदयितुम्
आगया।
आगता।

प्रतापः—सौभाग्यवती भव। एवंविधा एव स्त्रियो मम राज्यश्रियः सन्ति।

भिल्ली—मह भत्तणो मारेउं पडिण्णाअं कहं सोहग्गवई
मम भर्तारं मारयितुं प्रतिज्ञातम्, कथं सौभाग्यवती
होस्सामि।
भविष्यामि।

प्रतापः—

तव कान्तमथापि यो निहन्यात् प्रथमोऽसौ रिपुरस्तु मे रिपूणाम्।
मयि रक्षति ते प्रियं त्रिलोक्यां नहि कोऽप्यस्ति निपीडितुं समर्थः॥६॥

भि० भगिनी—सो तुम चेव आणाभंगस्स अवराही।
स त्वम् एव आज्ञाभङ्गस्य अपराधी

( ततः प्रविशतो राजपुरुषैर्गृहीतो धनुर्बाणसहितो भिल्लः राजाज्ञाव-हेलकस्तस्याः पतिश्च। )

राजपुरुषः—महाराज! एष भवन्तं मारयितुं लताविटपान्तरितो भूत्वा स्थित आसीत्, भवतश्चरैरस्य सूचनानुसारिणा मया गृहीतश्च।

भि० भगिनी—महाराअ! एसो क्खु मह भाआ, अवरो मे
महाराज! एष खलु मम भ्राता, अपरो मे
सामी, रक्खेह इमे।
स्वामी, रक्षत इमौ।

---

अथ प्रतापस्तस्याः सौभाग्यवत्त्वे परिपन्थिनमुद्दिश्य कथयति—तवेति। अथापि मया सौभाग्यवतीत्वेन प्रतिपन्नायां त्वयि यः कोऽपि तव कान्तं पतिं, निहन्यात्—मारयेद्। असौ मे—मम, रिपूणाम्—अक्बरमानसिंहादीनां मध्ये प्रथमो रिपुरस्तु, सर्वेभ्यः पूर्वमसावेव हन्तव्योऽस्तु। ते—तव प्रियं मयि रक्षति सति त्रिलोक्यां कोऽपि निपीडितुं विरोधकरणे तदनिष्टसंपादने समर्थो नास्ति। महाराअ इति 'कगचजतदपयवां प्रायो लुक्' इति जकारलोपः।

प्रतापः—इमौ मुच्येताम्। इयं राज्यलक्ष्मीमाँ वैधव्यं भ्रातृमरण-
दुःखं वा अनुभवतु।

( राजपुरुषः किञ्चिद् वक्तुमिच्छन् स्थितः। )

प्रतापः—नास्मिन्विषये किमपि वक्तव्यम्। एवंविधाया एव
राजभक्तप्रजायाः कृते देशरक्षा। अस्याः पितुः शवोऽपि
दीयताम्।

राजपु०—यथा आज्ञापयति महाराजः।

पटोन्नयनम्

( इति तौ मुञ्चति, शवं च ददाति। ततः सर्वे निष्क्रामन्ति )

( ततः प्रविशति सिंहासनस्थितस्य अकबरस्य सविधे मानसिंहः )

मानसिंहः—विजयताम् विजयताम् सार्वभौमो महाराजः।

अकबरः—( निःश्वस्य ) सेनापते! यावदयं प्रतापो न नम्रीक्रियते
तावन्न मे सौख्यं, नापि सार्वभौमता।

---

'अवर्णो यःश्रुतिः' इत्यस्य वैकल्पिकत्वात्क्वचिदकार एव। एवम्-भाया-
भाआ, राया-राआ, सोहिअ-सोहिय, अन्धआर-अन्धयार, महिअ-महिय
इत्यादिष्ववगन्तव्यम्। किञ्चिद् वक्तुमिति। असौ भवन्तमेव मारयितुं
प्रच्छन्नः स्थितो गृहीत इत्यक्षम्यापराधोऽसौ निहन्तव्य एव। अपरोऽपि
भवदाज्ञावहेलक इति कथं मुच्यते एषोऽपि हन्तव्य एव। नास्मिन्विषय
इति। सर्वं मयाऽवगत्य विचारपूर्वकमेव कृतमिति नात्र कथनस्यावसरः।

अथ अकबरसमीपे समागतो मानसिंहः सर्वभूम्यधिपतिमकबरं मन्य-
मानः कथयति–विजयतां २ सार्वभौम इति। निःश्वस्येति—प्रताप-
प्रभावतः सार्वभौमताया नाशात्सार्वभौमपदभ्रंशतो दुःखोद्रेकान्निःश्वस्य
कथयति–सेनापते इति। अजिते प्रतापे न मम सुखं, सार्वभौमता तु स्वत
एव नास्ति। तस्मात्किं कर्तव्यमित्याह—यावदिति। यावत्प्रचण्डो-महा-
वीरो, दारुणश्च, प्रतापो-मेवाडाधिपतिः, ज्येष्ठमासिकः संतापश्च, तर्नति-
स्वप्रभावतः स्वातन्त्र्येण तिष्ठति, धर्मेण खेदं जनयति च। तावदेव-
तावत्पर्यन्तं, शान्तिर्नैवागच्छति। एषः प्रतापः त्वया शरवर्षणेन-धारायां

यतः—यावत्प्रतापस्तपति प्रचण्डो न शान्तिरागच्छति तावदेव।
त्वयैव शाम्यः शरवर्षणेन सोष्मागमं पक्वफलं नयैनम् ॥७॥

मान०—आः! महानयमभिमानी, न बहुकालं स्थास्यति यदयं मामपि तिरस्कुरुते।

अकबरः०—किं किम्। 'मानस्याप्यपमानमेष कुरुते' किं सत्यमेतत्?

मानः—सत्यमेवैतत् न श्रुतं, किन्त्वनुभूतमेवैतत्।

अकबरः—आगतं पर्यवसानमस्य, यत् त्वामपि तिरस्कुरुते। को नाम जगति तव तिरस्कर्ता जीवितुं प्रभवति। स्वयमेवासौ कुठारेणात्मपादौ छिनत्ति।

मान०—अथ किम्! मुमूर्षोः पिपीलिकायाः पक्षौ समुत्पद्येते।

अक०ः—सेयं मे निकृतिर्यदेष हतको मत्तुल्यतामिच्छति।
त्वामप्येष तिरस्करोति तदिदं धिग्-धिग् वृथा पौरुषम्॥
किं काश्मीर-कलिङ्ग-वङ्ग विजयात् किं वापि याम्या जयात्
यावन्नैव जितो भवेदयमरिर्मेवाडदेशाधिराट्॥८॥

---

बाणानां वर्षणेन, शर इव वर्षणेन वृष्ट्या च, शाम्यः-शमनीयः, यथा वृष्ट्या तापः शाम्यते, एवमेव त्वयैव शमनीयः। तथा च सोष्मागमम्-ऊष्मागमेन सहितं, पश्चात्तापेन सोच्छ्वासम्, उष्णयुक्तं च। 'उष्ण ऊष्मागमस्तपः' इत्यमरः। पक्व—चरमावस्थायि फलं दुरदृष्टभोगो यस्य तम्, अन्यत्र परिणतफलमेनं प्रतापं नय प्रापयेत्यर्थः॥ ७॥

अथाकबरः किं किमित्यादिना मानसिंहमुत्तेजयति। पुनरुत्तेजयन् कथयति-सेयमिति। सा इयं परामृश्यमाणा प्रत्यक्षतया मया स्वयमनुभूयमाना च मे मम निकृतिरनादरः, यदेषः मम सीमासन्निधे विद्यमानो, हतको मृतप्रायो, दरिद्रो मत्तुल्यतामिच्छति, स्वातन्त्र्येणात्मानं ख्यापयति। नैतावतैव शाम्यति किंतु एष त्वामपि तिरस्करोति। अहो इत्याश्चर्यं। निष्फलं मज्जीवनं धिक् २ अत्र तुल्यताया इच्छुकस्य तिरस्कारकर्तुश्चै-

